॥ श्रीः ॥

॥ श्रीनिवासोविजयते ॥

# ॥ द्वैताध्वकण्टकोद्धारः ॥



श्रीभारतसिंह - विद्याभूषण - महामहोपाध्याय
तातपाद - खापे - रामचन्द्राचार्यचरणसेवासमासादित
ब्रह्मविद्यावैशद्येन

**रा. नागराजशर्मणा**

विरचितः ।

महामहोपाध्यायादि - बिरुदविराजमान
खापे. रामचंद्राचार्यैः
साहित्यशिरोमणिना
**रा. सुदर्शनशर्मणा च**
प्रत्यवेक्षितः ।

तेनच ।

कुंभघोणे
**श्रीविद्यामुद्राक्षरशालायां**
मुद्राप्य प्रकाशितः ।





सुभानु—१९४३—१८६५ शके ।



~~मूल्यम् रू. २.~~ 1943. [प्रापणव्ययः पृथक् ।

॥ श्रीः ॥

॥ श्रीनिवासोविजयते ॥

# ॥ द्वैताध्वकण्टकोद्धारः ॥



श्रीभारतसिंह - विद्याभूषण - महामहोपाध्याय
तातपाद - खापे - रामचन्द्राचार्यचरणसेवासमासादित
ब्रह्मविद्यावैशद्येन
**रा. नागराजशर्मणा**
विरचितः ।

महामहोपाध्यायादि - बिरुदविराजमान
खापे. रामचंद्राचार्यैः
साहित्यशिरोमणिना
**रा. सुदर्शनशर्मणा च**
प्रत्यवेक्षितः ।

तेनच ।

कुंभघोणे
**श्रीविद्यामुद्राक्षरशालायां**
मुद्राप्य प्रकाशितः ।

---



सुभानु—१९४३–१८६५ शके ।

---



---

मूल्यम् रू०. ३)५० 1943. [प्रापणव्ययः पृथक् ।

॥ श्रीः ॥



---


PRINTED IN INDIA.

**Price Rs. 2.50 Post Extra.**

Copies from:—

R. S. SARMA (Siromani)

*14 Venkatrao Street, Kumbakonam.*

(2)

Manager, Madhva Vilasa Book Depot,

*No. 63, East Ayyan Street, Kumbakonam*

# PREFACE.

## Dvaita-Adhva-Kantakoddhara.

In the progressive evolution of Indian Philosophy, the 16th century witnessed remarkable contributions made by champions of Advaita, Visishtadvaita, and Dvaita. Tatacharya, Appayya-Dikshita and Vijayindra were the stars that shone with dazzling brilliance in the Vedantic firmament in that century. Appayya-Dikshita wrote in support of *Advaita*, and Vijayindra Tirtha in support of *Dvaita*.

Appayya-Dikshita attacked Dvaita in his "Madhva-tantra-mukha-mardana" (verse) and "Madhva-mata-vidhvamsana" (prose) the latter being his own commentary on the former. No 113 of the "Anandasrama-Sanskrit series-Poona" contains the text of both. In addition, those who control the said series have thought fit to publish what purports to be a gloss on the prose-work of Appayya-Dikshita by one Pandit Narayana Sastry of the Maharaja's Sanskrit college at Mysore.

Vijayindra Tirtha immediately refuted Appayya-Dikshita's work in his "Madhva-adhva-kantakoddhara". Pandit Narayana Sastri on the ostensible plea of writing a gloss on Appayya-Dishita's work has quoted the *ipsissima verba* of Vijayindra Tirtha's replies to Dikshita and endeavoured to answer them in his own way and undoubtedly to his own satisfaction. Pandit Narayana Sastry's has been a perfectly miserable and laughable performance. In many contexts, he has not at all been able to understand the precise and exact significance of the language of Vijayindra Tirtha. In others, he has freely used the language of Vijayindra without caring for the formality of an acknowledgment.

Many students of philosophy in general and of Dvaita-Vedanta in particular drew my attention to Mr. Sastry's outrageous attack on Vijayindra with a request that Vijayindra should be vindicated and Mr. Sastry's statements refuted. At first, I had thought of ignoring Mr. Sastry's performance as it is so puerile and school-boyish, but, on second thoughts I came to the conclusion that even misrepresentations and malevolent criticisms like those indulged in by Mr. Sastry would, if left unrepudiated, engender the totally erroneous impression that an unsurpassed and unsurpassable controversial classic like Vijayindra's had been actually put in the shade by this Mysore Pandit!

I have accepted the Pandit's challenge. Appayya's verse-attack was repudiated by Vijayindra in a verse-work. Similarly, Dikshita's prose-work was refuted in a prose-work by Vijayindra. Unfortunately, Vijayindra's work in verse has not yet been traced. So, in reply to 66-stanzas of Dikshita, I have composed 66-stanzas employing the different metres used by Dikshita. This metrical work is known as "Prachina-kantakoddhara". (riddance of the old thorn)

In a prose-work, I have refuted in detail the unfounded charges levelled against Vijayindra by Mr. Sastry. This prose-work is known as "Naveena-kantakoddhara". (riddance of the new thorn) Further, as the verse-work cannot be understood without a commentary, I have composed almost a term-for-term commentary entitled "Padartha-Deepika".

Thus, the present work as a whole is known as "Dvaita-adhva-kantakoddhara" (riddance of thorns in the path of Dvaita) The "Poorvaardha" (First Part) is "Prachina-kantakoddhara" with "Padartha-deepika".

The "Uttarardha" (Second Part) is "Naveena-kanta-koddhara".

I have chosen over 70 contexts. In most of them, I have shown that Mr. Sastri has not understood the meaning of the language used by Vijayindra. Yet, he has had the adroitness and temerity to criticise what he has not been able to understand at all. That is surely, not honest, clean, Vedantic debate.

Indian philosophy to-day is in a chaotic condition brought about by erroneous expositions and comic translations of Sanskrit classics like the comic rendering of tamil *eli-miccham-pazam* i. e. lime fruit into "Rat-Remainder-Fruit". Indian misrepresentations of Indian philosophy are to-day working greater havoc than foreign misrepresentations.

Indians to-day who cherish the fond and foolish illusion that Providence has charged them with the special mission of interpreting Eastern Thought to the West have dished Indian Philosophical systems and doctrines with a view to titillating the jaded palates of connoisseurs in Europe and America. Such comic culinary artists of Indian philosophy are welcome to their jobs.

But those trained in the honest and sportsmanlike methods of philosophical controversy and those who are happily, luckily acquainted with the truths, traditions of Indian systems, and those who have undergone some atleast of the trials and tribulations of discipleship under the accredited Pandits of matchless metaphysical scholarship cannot stomach the sorry stuff dished up by the culinary artists of international, and even interplanetary recognition and reputation.

Mr. Narayana Sastry must realise that if he is either unwilling or unable to discharge the elementary duty of clean philosophic controversy that he should first understand what exactly is the import of the language used by an author before attempting to attack his views and position, he must be reckoned out of court in Vedantic debates. I hope I have successfully made this clear.

I may be permitted to add a word to reviewers. To lotus-eating reviewers who are generally content with proclaiming the conventional LIE of Book-review-civilization that types, paper, binding etc are good, bad, or indifferent and that much may be said on both sides et hoc, the present work is a direct challenge. Honest, disinterested, and competent reviewers will have first to study the arguments advanced by (1) Appayya-Dikshita, (2) secondly, Vijayindra-Tirtha's reply to them, (3) thirdly, Mr. Narayana-Sastry's criticism of Vijayindra's reply, and (4) fourthly, finally, my refutation of Mr. Sastry's statements, before they can hope to do anything like justice to my present philosophical endeavour. Whatever it is, I welcome the reviewers' verdict. I only pray that the verdict may be open, direct, and straightforward.

My thanks are specially due to Messers. K. Srinivasan (Managing Editor) and K. Gopalan (Proprietors of the "Hindu") for having enabled me from time to time to place the contents of the unpublished works of Vijayindra-Tirtha before the public in the form of the Acharya-Day anniversary-contributions. I also thank my nephew Mr. N. Satyanarayana for his help.

Madras and Kumbakonam
June 1943.

**R. NAGA RAJA SARMA.**

॥ श्रीः ॥

# ॥ पुरोवादः ॥

'आनन्दाश्रमग्रन्थावल्यां' मुद्रितं (११३ अङ्कितं) 'मध्व-तन्त्रमुखमर्दन'मप्पय्यदीक्षितविरचितमस्मद्दृष्टिपथमवतीर्णम्। कलिविलासकलुषितेप्यस्मिन्काले वेदान्तविचारकुशलानां जिज्ञासूनां विदुषां विद्यार्थिनां च मुदे एतादृशवादग्रन्थानां मुद्रणमत्यावश्यकं मन्यामहे। 'मध्वतन्त्रमुखमर्दन'प्रकरणं श्लोकरूपम्। 'मध्वमत-विध्वंसना'ख्यं तस्य व्याख्यानं तेनैव दीक्षितेन रचितं वाक्यरूपम्॥

दीक्षितसमकालीनैस्सर्वतन्त्रस्वतन्त्रैः श्रीविजयीन्द्रयोगीन्द्रैरनुपदमेव तद्दीक्षितीयं प्रकरणमखण्डि 'मध्वाऽध्वकण्टकोद्धारा'ख्यवादग्रन्थरत्ने॥

'आनन्दाश्रम'मुद्रितपुस्तके महीशूरराजकीयसंस्कृतकलाशालायामद्वैतवेदान्ताऽध्यापकेन नारायणशास्त्रिणा कृता काचन 'टिप्पणी' दरीदृश्यते। तस्यां च टिप्पण्यां विजयीन्द्रगुरुपादग्रन्थखण्डनाय प्रयतितं शास्त्रिणा। तत्रतत्र 'मध्वाऽध्वकण्टकोद्धार' पङ्क्त्यनुवादानन्तरं स्वकपोलैककल्पितक्षुद्रदूषणान्येव खण्डनतयोक्तानि शास्त्रिणा। बहुषुप्रकरणेषु विजयीन्द्रपादवाक्यानामर्थ एव नाऽवबुद्धश्शास्त्रिणा। अनवबोधप्रकाराश्च तत्रतत्र प्रकरणेषु प्रदर्शिता अस्माभिः। सामान्यतः कोपिपक्षो यदि वादकुशलेन न सम्यगवबुद्धस्स-यदि प्रामाणिकस्तदानूनमात्मनाऽनवबुद्धस्य पक्षस्य खण्डने न प्रवर्तेत। नैवं शास्त्रिनारायणः। 'घटंछिन्द्या'दित्यादि 'प्रसिद्धः पुरुषोभवेदि'त्युपश्लोकितमनुसृत्य नयं श्रीविजयीन्द्रग्रन्थखण्डनाभासेन प्रसिद्धिमभिकांक्षमाण आत्मनः प्रावर्तत तादृशखण्डन इति सांप्रतमेवाऽप्रामाणिकानाम्। अप्रामाणिकास्तावत्खण्डनोद्यमनादर्वा-

कपूर्वपक्षवाक्यवास्तविकार्थाविबोधव्यसनितामपि नोररीकुर्वन्तीति विदितमेव सर्वेषाम् । स्यादेतत् ॥

शास्त्रिकृतविजयीन्द्रोक्तिदूषणखण्डनं कर्तव्यमित्यनेकतत्त्वजिज्ञासुभिरनिशमर्थितैरप्यस्माभिर्निग्रहाऽनर्हं 'मखिवर्यभूषण'दूषणं प्रातिस्विकेन रूपेण न कार्यं यतश्शास्त्रिटिप्पणीपाठका एव तट्टिप्पण्या निरतिशयक्षुद्रताम्, बाधितताम्, निर्युक्तिकतामाबालगोपालपरमपरिहासास्पदवाक्ययुक्तिघटिततां च झटित्येवसाक्षात्कुर्युरितिधिया नैतावन्तमनेहसं तट्टिप्पणीखण्डने व्यापृतम् । एवमुपेक्षिता च टिप्पणी नूनमखर्वशास्त्रिनारायणगर्वप्ररोहायैव भूयादिति शकलशस्साखण्डिता विभाव्यतां निर्मत्सरप्रामाणिकविमर्शकैः ॥

श्लोकरूपस्य दीक्षितग्रन्थस्य खण्डनमकारिविजयीन्द्रपादैः श्लोकग्रन्थे 'मध्वतन्त्रमुखभूषणा'ख्ये । श्लोकरूपश्च स ग्रन्थस्संप्रतिनोपलभ्यते । तस्मादस्माभिर्व्यरचि श्लोकरूपो दीक्षितीयश्लोकखण्डनपरोग्रन्थः । तस्य च 'प्राचीनकण्टकोद्धार' इति नाम । सचाऽस्मद्रचितया 'पदार्थदीपिका'ख्यया व्याख्यया सनाथीकृतः । स च पूर्वार्धे मुद्रितः ॥

शास्त्रिटिप्पणीखण्डनं तु वाक्यप्रबन्धे व्यरचि । तस्य च 'नवीनकण्टकोद्धार' इति नाम । स एवोत्तरार्धे मुद्रितः । प्राचीनकण्टकः दीक्षितः । नवीनकण्टकश्शास्त्रिनारायणः । 'द्वैताध्वकण्टकोद्धार' इति कृत्स्नस्य ग्रन्थस्य नाम । तत्र च पूर्वार्धोत्तरार्धप्रतिघटित प्राचिननवीनकण्टकोद्धारविवेकस्साधुसंजगृहे ॥

अत्रेदं विचारणीयम् । अप्पय्यदीक्षितस्तु माध्वपश्चाधिकरणीदूषणं मध्वमतरीत्यैवेति प्रतिज्ञाय 'तद्रीत्यैवमतंध्वस्तमि'त्युपसंहरन्निर्वर्तितनिजप्रतिज्ञ इव विभाव्येत मन्दमतिभिरापातप्रत्ययैकशरणैः । वस्तुतस्तु नेयं न्याय-वैशेषिकाभिमतवादप्रतिवादरीतिः ॥

पौनःपुन्येन दीक्षितः कर्तव्यतामूढ एकामेव युक्तिं सवत्र संचारयति मध्वमतविध्वंसनाय। मध्वमते ब्रह्मणस्तद्गुणानांचाऽभेद इत्युक्ते तर्हि तत एव ब्रह्मणोजीवानामभेदोऽस्त्वित्यापादयन् दीक्षितः कथमनुन्मत्तस्स्यात्? कथं वा प्रामाणिकपारमार्थिकवादप्रतिवाद-कुशलःपरिगण्येत? द्वैतविद्वेषकालानलदग्धान्तःकरणभट्टोजिदीक्षि-तगीताभिमानिकपाण्डित्यसर्वतन्त्रस्वातन्त्र्यादिविशिष्टाऽप्पय्यदीक्षित-स्सर्वत्रमध्वमतविध्वंसन एकामेवबाधितां तुच्छतमां युक्तिमुपयुञ्जान आभिमानिकेन मध्वमतविध्वंसनसमधिगतेन जयेन नूनमद्वैतविद्या-चार्यश्शोभते। 'उपरागेस्त्रायादि'त्युक्ते सर्वदा सर्वत्र त्वद्रीत्यास्नानं स्यादिति क्षुद्रतमाऽऽपादनसब्रह्मचारि पञ्चस्वप्यधिकरणेषु दूषणमेक-मेवाऽभ्यभायि दीक्षितेनेति तदीयं पञ्चाधिकरणीखण्डनं निग्रहानर्ह-मेवेति कोहि नाम प्रातिभचक्षुष्मान्नेक्षेत?

किंचाऽद्वैतस्य मध्वमते निरसनीयतया तत्प्रक्रियामूर्धन्यजीवे-शाऽभेदमाश्रित्य पूर्वपक्षिते तद्रीत्या तादृशजीवेशाऽभेद एव शास्त्र-विषय इति प्रतिबन्दीमुद्घाटयन्मखिवर्यो मध्वमतं ध्वस्तं मत्वा नूनं जयभेरीं नादयामास!! ततश्च न जिज्ञासाशास्त्रारंभः!! ब्रह्म-तद्गुणाऽभेदे जीवेशाऽभेदोस्तु। ततश्च जन्माधिकरणं दुष्टम्!! एवमेवाऽऽनुमानिकाऽन्यदेवतापरत्वसंभवेन न विष्णोश्शास्त्रयोनि-त्वम्!! नापिविष्णौ समन्वयः!! बिम्बभूतं ब्रह्माऽनुपास्यमिति तदवाच्यमेवेतीक्षत्यधिकरणं दुष्टम्!! ईदृशीमेकामेव सकलप्रमाण-विरुद्धान्, कुत्सिताम्, कालात्ययाऽपदिष्टाम्, प्रक्रियां सर्वत्राऽनुस-सारदीक्षितोमध्वमतविध्वंसने। सैषातुच्छतायाः परामेव कोटिमाटी-कृत इति निपुणतमं न्यरूरुपन्विजयीन्द्रगुरुपादाः। सविशेषाऽभेद-वादिमध्वमतस्य दूषणं तद्रीत्यैवाऽहोस्वित्कयाचनापि रीत्याऽन्यया कर्तुं तुरीयशिरोपि नेष्टे। निर्विशेषाऽभेदापरपर्यायचिन्मात्रैक्यैकपर-तत्वाऽद्वैतमतस्यतद्रीत्यैव खण्डनं प्रामाणिकमत्यन्तसुकरं च। सा-

धूक्तं भगवत्पादैः—'अज्ञानाभावतश्शास्त्रं सर्वं व्यर्थीभविष्यति' 'अज्ञाताऽखिलसंवेत्तुर्घटते न कुतश्चने'त्यादि। कथङ्कारं निर्विशेषस्य चिदचिदात्मकप्रापञ्चिकबहुभवनविवर्ताधिष्ठानतेत्यादि निरूपयतु यः कोपिवाऽद्वैतविद्यायार्योविहाय वाचाटतां दूरं निस्सार्य च दुर्घटत्व-भूषणादिपारिभाषिकपरश्शतप्रमाणशून्यकल्पनाजल्पनादिकम्॥

नारायणशास्त्रिशिष्यस्तु रामचन्द्रशास्त्री तदीय 'प्रस्तावना' यामुन्मत्तप्रलपनानि नानाविधानि कुर्वाण आत्मन आविष्करोति काम्यनिर्वचनीयामद्वैताऽऽचार्यताम्। व्यासस्याऽद्वैत एव तात्पर्य-मिति निर्भयमुद्घुष्यते तेन। काममुद्घुष्यताम्। 'शब्दमात्रान्नभे-तव्य'मित्याभाणकम्। कपिलकणादादिदूषितमद्वैतं बादरायणीय-मिति कोह्यनुन्मत्तो निश्चिनुयात्? एवमपि कपिलकणादादिमहर्षि-दर्शनाचार्यादिदूषितमद्वैतमनुपादेयमेवप्रेक्षावतामित्यस्तु। सेयं प्रति-बन्दी न तुरीयशिवस्यापि शक्यसमाधाना॥

किंचाऽविरोधाध्याये सौगतमतं खण्डितवता बादरायणेन तत्खण्डनेनैवाद्वैतमपि खण्डितमेव। शून्यवादमायावादयोस्समानयो-गक्षेमत्वात्। अद्वैतापेक्षयाप्यभ्यर्हितं सौगतमतमिति बादरायणेन तदेव निरसनीयपूर्वपक्षपरिगणितम्। सौगतनिरसनेनैवाऽद्वैतं निरस्तं मन्वानेन सूत्रकारेणाऽद्वैतं प्रातिस्विकरूपेण निग्रहाऽनर्हतया पूर्वपक्ष-कक्ष्यायामपि न पर्यगणीतिराद्धान्तस्साधुसंगच्छते॥

आनन्दतीर्थमते 'वैदिकमर्यादाभूयस्याकुलतां गते'तिशपथमा-त्रेण दीक्षितकोटीभिरपिसमर्थयितुं न शक्येत। वस्तुतस्तु सकल-वैदिकलौकिकमर्यादाऽद्वैतमत एवाकुलीकृता। तथाहि—तद्रीत्या-श्रुतीनामतत्त्वावेदकत्वात्। वेदविहितवर्णाश्रमधर्म-तदनुष्ठान-तत्फ-लस्वर्गनिरयादीनामलीकत्वादध्यस्तत्वात्। बाढमेवं वैदिकमर्यादो-ल्लङ्घनशीलदर्शनमूर्धाभिषिक्तमद्वैतमेवेति मनसि कलयन्दीक्षितस्त-द्दोषमन्यदर्शन आरोपयामास। व्यभिचारनिरतोनिजदोषाच्छादन-

कृतेदोषमेकपत्नीव्रतशीलपुरुषधौरेये नूनमारोपयति । एवमेव कामचारिणी कुलटी पतिदेवतानां धुरिस्थितायामपीति सार्वजनीनतुच्छकलुषमार्ग एव समाश्रितो दीक्षितेन । व्यभिचारिण्येवदीक्षितधीरिति निष्कंपं निष्प्रत्यूहं प्रत्यपादि विजयीन्द्रगुरुपादैः ॥

सूर्युपाह्वस्यास्य शास्त्रिणस्सूरित्वमध्यस्तं प्रातिभासिकमेव । अस्य गुरुणापि विजयीन्द्रपादवाक्यार्थोनावबोधीति का कथा शिष्यस्य ? स च मनुते विजयीन्द्रपादैः दीक्षितग्रन्थं 'पङ्क्तिशोनूद्य' 'तन्न, तत्तुच्छम्, तन्निरस्तमित्यादिवाक्यैः केवलैर्दूषितमि'ति । दीक्षितेनापि द्वैताकरग्रान्थिकपङ्क्त्यनुवादानन्तरं 'निरस्तमि'त्यादिपदप्रयोगेण केवलेन दूषणं किमपि निजकपोलकल्पितमेवाऽभ्यधायि ॥

'मध्वाऽध्वकण्टकोद्धारे' तु सकलप्रामाणिकमनोहरा शास्त्रानुगुण्यसनाथैव प्रक्रिया विजयीन्द्रपादैरुररीकारीति विदितमेव पारमार्थिकवेदान्ततत्वविमर्शशीलानाम् । तथाहि—प्रथमं तावद्विजयीन्द्रपादैः स्वकीयमतप्रक्रियोपन्यस्ता । अनन्तरं दीक्षितग्रन्थपङ्क्त्यनुवादः । अनुपदमेव युक्त्युपन्यासपूर्वकं तत्खण्डनमित्ययमेक एव वादप्रबन्धरचनाप्रकारस्सर्वत्रविजयीन्द्रपादग्रन्थेषु जागर्ति लोकोत्तरविच्छित्तिविशेषशोभाभरितः । तत्वमिदं विद्वेषानलदग्धस्वान्तशास्त्रिदीक्षितकोटीभिरपि साक्षात्कर्तुमशक्यमिति सिद्धम् । 'तद्विद्धि प्रणिपातेने'त्यादिश्रद्धाभक्तिनम्रतादिशीलपारमार्थिकजिज्ञासूनामेव तत्वानीदृशानि वाग्देवतानुग्रहान्नूनं पुरःस्फूर्तिकानि भवेयुर्नान्येषाम् । स्यादेतत् ॥

विजयीन्द्रपादोक्तदोषाः 'प्रत्यस्ता इति प्राज्ञानां पुरतोवक्तुमुत्सहनेमेचेत' इति विकत्थमानश्शास्त्रिरामचन्द्रो नूनं न जानाति तद्गुरुश्शास्त्रिनारायणो विजयीन्द्रपादवाक्यार्थपरिज्ञानेप्यशक्त इति । अनुरूप एवायंगुरोश्शिष्यः । यतः—गुरोस्तु मौढ्यं व्याख्यानं शिष्यश्शाठ्येन शोभते । उभौ जयीन्द्रवाक्यार्थज्ञानशून्यशिरोमणी । अहो-

मोहस्य माहात्म्यं तत्रैकश्शिष्यतां गतः । तावुभौ निग्रहाऽनर्हौ त्रिजयीन्द्रोक्तिदूषकौ ॥

अथकेतेप्राज्ञाः येषां पुरतश्शास्त्रिरामचन्द्रः किमपि वक्तुमुत्सहते? ते च प्राज्ञाः पूर्वपक्षग्रन्थवाक्यार्थविधुराणामपि तद्ग्रन्थखण्डनोद्यमः प्रामाणिक इति मन्यन्ते वा? अन्यदीयप्रबन्धवाक्यानामपहरणमात्मसात्करणं च प्रामाणिकमिति वा? शास्त्रिप्रार्थिताऽऽभिमुख्यसान्निध्यादिप्राज्ञाः पुनरन्धेनैवनीयमाना अन्धा एवेति कोहिनाम न वेत्ति प्रेक्षावान्? स्यादेतत् ॥

सूर्युपाह्वयोऽप्ययं 'अन्येषांनामापि न श्रूयत' इति 'दृष्टश्रुतानां' दीक्षितग्रन्थानां पञ्चचत्वारिंशन्नामानि लिखन्कथं सकलप्रामाणिकपरिहासभाजनं न स्यात्? 'दीक्षितेन्द्रविजये' सप्तत्यधिक ग्रन्थनामानि मुद्रितानि । एवं स्थिते परिशीलनसामर्थ्यविधुरः कथङ्कारं विजयीन्द्रपादोक्तिः स्वगुरुणा खण्डितेत्यस्थाने रौति? स्थाने काणस्य गुरोः काणबधिरश्शिष्यः । कलिकलितदुरूहाश्चर्यनिलयेप्यस्मिन्कालेलोकातिशायि गुरुशिष्याऽऽनुगुण्यमिदं शरदां शतमेधतां तुरीयशिवमायाशाबल्यलब्धजन्माऽनुग्रहात् । तथास्तु । शास्त्रिनारायणीया टिप्पणीतु तुच्छतायाः परामेवकोटिमाटीकत इति तत्र तत्र निपुणतममुपपादितमस्माभिः । एवं स्थिते टिप्पण्या अस्या मुद्रणेन 'आनन्दाश्रम' निर्वाहकाणा 'मज्ञानाश्रम' निर्वाहकत्वमेव सेत्स्यतीति वक्तव्यं भवति ॥

किंचेदं तत्वान्तरम् । वाराणस्यां महामहोपाध्याय श्रीचिन्नस्वामिशास्त्रिभिस्संपाद्य प्रकाशितं 'मध्वतन्त्रमुखमर्दन' मवालोक्यस्माभिः । श्रीशास्त्रिभिर्विजयीन्द्रोक्तिखण्डने न व्यापृतमिति सांप्रतम् । 'विवादश्च विवाहश्च समयोरेवे'ति दीक्षितोक्तिखण्डनशक्ताः विजयीन्द्रगुरुपादा एव । नैवं विजयीन्द्रवाक्यार्थपरिज्ञानेप्यशक्तश्शास्त्रिनारायणस्तत्खण्डनाधिकारी ॥

तत्वनिश्चयस्तु परपक्षदूषणेनैव साधीयान्। परंतु शास्त्रिनारायणः परवचनमबुद्ध्वा विजयीन्द्रपादवाक्यार्थमकृत्वैव मनसि कचित्तद्वाक्यान्यात्मीयतया लिखित्वा सकलप्रामाणिकप्रतिपन्नवादप्रक्रियामाकुलीकृत्य कथङ्कारं विजयीन्द्रपादोक्तिखण्डनाधिकारी भूयात्? नाऽस्मिन्जन्मनीति मुक्तकण्ठं वदामः। के तर्हि विजयीन्द्रप्रबन्धपठनपाठनविमर्शनाद्यधिकारिणः? शृणु—

'ये नित्यं पदवाक्यमानसरणिसंशीलनाऽलङ्कृताः
तेषामेव करोति या प्रतिपदं संतोषमाकर्णनात्।
या चाऽनेकविनेयषट्पदततेर्धम्मिल्लमल्लीसमा(सदा)
सैषावाग्विजयीन्द्रसंयमिमणेर्ज्ञानार्थिभिस्सेव्यताम्'॥

इति पूर्वोक्तशास्त्राभ्याससंपत्सनाथा एवाधिकारिणः। नाऽन्ये। रे! शास्त्रिनारायण! तवैतादृशोस्तिवाऽधिकारः? नास्त्येवेतित्वदीयटिप्पणीतस्सिद्धम्। तस्मात्सालभञ्जिकोक्तविक्रममाहात्म्यप्रतिपादककथाश्रवणानन्तरं स्वस्मिंस्तादृशगुणाऽभावेन नितरां व्रीडितः विक्रमाधिष्ठितसिंहासनारोहणव्यसनितां विहाय यथा भोजोनिववृते रे! शास्त्रिनारायण! तथैव त्वमपि निवर्तस्व दुराग्रहैकमूलकाद्विजयीन्द्रोक्तिखण्डनसाहसिकदुर्व्यापाराद्यदिप्रामाणिकशास्त्रवित्कोटिषुपरिगणनामर्हस्यभिकांक्षसेवा। इयांस्तुविशेषः। भोजस्य विक्रमसिंहासनारोहणाशा सदाशा। तव तु विजयीन्द्रोक्तिखण्डनाशा दुराशेति संप्रत्यलम्। विस्तरस्तु समयान्तरे भविष्यति॥

अपरमिदमालोच्यतां पारमार्थिकविमर्शकैः। परमेश्वरस्य प्रसादं विना पुंसामद्वैतवासना नाविर्भवतीति मन्वानोदीक्षितोनिर्विशेषचिन्मात्रैक्यवादी कथमिवश्रद्धेयवचनः स्यात्? किंच श्रीकण्ठेन शिवसर्वोत्तमत्वसंवलितविशिष्टाऽद्वैतमेवस्वाभिमतं मतमिति मुक्तकण्ठं निस्संशयमभिहितेपि तस्याऽद्वैत एव तात्पर्यमिति विकत्थनशीलो वा कथं श्रद्धेयवचनोभूयात्? ज्ञानमज्ञानस्यैव निवर्तकम्—न हि

दीपानयने दीपप्रभयाऽन्धकारनिवृत्तौ कस्यचित्प्रभोः प्रसादस्याऽपेक्षास्तीति खल्वद्वैत्यभिमता प्रक्रिया। एवं स्थिते मायाशबलितपरमेश्वरप्रसादापेक्षया पारमार्थिकविष्णुप्रसाद एवाभ्यर्हित इति न दीक्षितवचनं श्रद्दधीमहि। स्यादेतत्॥

अदवीयस्यानन्दतीर्थमुनिपदवीत्येकत्र। आनन्दतीर्थीयं मतमग्राह्यमेवेत्यन्यत्र। क्वचिच्छिवोवा विष्णुर्वेत्यनास्था। अन्यत्र शिवाऽद्वैतनिर्णय इत्यारवः। क्वचिदपि पुनश्चिन्मात्रोऽहं सदाशिव इत्यहंभावाभाटः। अन्यत्र भवामस्तेदासा इति याच्ञा। एवं परस्परविरुद्धपक्षपातविरुद्धमताश्रयणतत्तत्खण्डनमण्डनाद्युच्चावचाऽप्रामाणिकवादप्रतिवादमार्ग एव शिश्रिये दीक्षितेनेति कथमाप्तस्समखिवर्यः? कथं वा तदुक्तीनामाप्तिमूलकत्वम्? विमर्शकैर्विचारणीयम्। सर्वस्यास्य दीक्षितप्रतिपादितस्य परस्परविरुद्धार्थस्य व्यवहारदशायामस्ति सांव्यवहारिकं प्रामाण्यमित्यादिविकत्थनं पारिभाषिकं स्वगोष्ठीमात्रनिष्ठं प्रलपनमिति विभावनीयं प्रमाणैकशरणैर्निष्कंपं निरवशेषं तिरस्करणीयमिति सिद्धम्॥

अपरमिदमाश्चर्यं कलिकालसाधारणम्। 'यद्यपि मदुक्तदूषणानि सम्यङ्नभवेयुरि'ति साशङ्क इव लिखति दीक्षितः। उक्तिरियं 'क्व सूर्यप्रभवोवंश' इत्यादाविव स्वाहङ्कारखण्डनार्था वा? वास्तविकमध्वतन्त्रदूषणाशक्तिदुराग्रहादिजन्यान्तःकरणकंपशैथिल्योपादानका वा? नाद्यः—'प्रथितस्तनूज' इत्याद्यात्मश्लाघनबद्धदीक्षदीक्षितेन निजाहङ्कारखण्डनायोगात्। प्रत्युत तत्रतत्र तदहङ्कारविकत्थनादितामसगुणप्राचुर्यशब्दाडम्बरादीनामेव दीक्षितेनाऽऽविष्कृतत्वाच्च। तस्मादवसीयते द्वितीय एव विकल्पस्साधुरिति। तथा च निखिलनिगमगणनिष्कृष्टार्थनिर्णयनिपुणनिर्दुष्टसकलप्रामाणिकदर्शनमूर्धाभिषिक्तमध्वतन्त्रदूषणाऽशक्तोदीक्षितः केवलेन दुरन्तेन केनापि दुराग्रहेणान्तःकरणशैथिल्येन भयेन कंपेनैव चकितचकितं प्रावर्तत

प्रामाणिकपरिहासास्पदसर्वनिग्रहस्थानैकभाजनतदीयग्रन्थनिर्माणइति करतलामलकमिदं निर्मत्सरपारमार्थिकब्रह्ममीमांसाकुशलानां विमर्श-कानामिति सर्वं समञ्जसम् ॥

संप्रति धन्यवादसमर्पणं कार्यम् । श्रीभारतसिंह विद्याभूषण-महामहोपाध्यायादि-बिरुदभूषित-तातपाद श्रीरामचन्द्राचार्याः प्राचीन-नवीनकण्टकोद्धारमार्गप्रदर्शनेन बहूपचक्रुरिति तेभ्यो धन्य-वादास्समर्प्यन्ते ॥

एवमेव साहित्यशिरोमणिनाऽनुजन्मना रा. सुदर्शनशर्मणे तत्प्रबन्धप्रणयनमुद्रणादिषु साहाय्यमारचितमिति तस्मै धन्यवादाः ॥

ब्रह्ममीमांसाशास्त्ररहस्यतत्वयुक्त्याद्युपदेष्टारस्संप्रति कृतज्ञेन मया स्मर्यन्ते—श्रीनदीतीरस्वाम्याचार्य ब्रह्मतर्क कृष्णाचार्यादयः—(द्वैतिनः) श्रीहरिहर-गणपति-नीलमेघशास्त्रिणः—(सर्वे महामहो-पाध्याया अद्वैतिनः) श्रीचतुश्शास्त्रवेदकल्पतरु-श्रीशेषाचार्य शता-वधानिश्रीनिवासाचार्यादयः–(विशिष्टाद्वैतिनः)

श्रीमद्रपुरीय हिन्दुब्राह्मीपाठशालाध्यापकास्मन्मित्रवर्य श्रीवेंक-टरमणरायरचितं साहाय्यं न कदापि विस्मर्तुं पारयामः । उत्तमर्णा-स्सर्वेपि ते श्रीविजयीन्द्रगुरुपादकृपापात्रतां भजेयुरित्यनिशमभ्यर्थये ॥

श्रीमत्सर्वतन्त्रस्वतन्त्रेत्यादिबिरुदावलीविराजमान श्रीमदुत्त-रादिमठसर्वज्ञसिंहासनाभिषिक्त-श्रीसत्यप्रज्ञतीर्थ-श्रीमच्चरणानाम-नुग्रहेण ग्रन्थोयं श्रीविजयीन्द्रगुरुपादान्तर्गतश्रीलक्ष्मीनृसिंहप्रीतये भूयादित्यसकृदभ्यर्थये ॥

इति

पारमार्थिकविद्वत्समुदायदासः

रा. नागराजशर्मा ।

॥ श्रीः ॥

## ॥ अवधेयम् ॥

| पत्रे | पंक्तौ | शुद्धम् |
|---|---|---|
| ३ | ७ | रत्नघटना |
| १३ | १६ | तात्पर्यघटने |
| १५ | २३ | भेदं गमयितुम् |
| १९ | ८ | न्यायाद्ब्रह्मणोस्तु |
| २४ | ५ | वेदो |
| ३२ | ४ | विजयीन्द्र |
| Do. | १३ | श्रुत्येक |
| ३४ | १४ | Do. |
| ४१ | २० | बळित्थर्चोऽपि |
| ५१ | २५ | सिद्ध्येदिति |
| ५६ | १० | Do. |
| ६४ | १ | नाद्यते |
| Do. | २५ | जगद्व्यापारस्य |
| ६७ | ११ | पारमार्थिकोऽर्थ |
| ७२ | ७ | ब्रह्म |

॥ श्रीः ॥

॥ श्रीलक्ष्मीनृसिंहाय नमः ॥

# ॥ प्राचीनकण्टकोद्धारः ॥

कल्याणगुणपूर्णाय वल्लभाय श्रियस्सदा ।
श्रीमध्वदेशिकेष्टाय श्रीनृसिंहायते नमः ॥१॥

---

॥ श्रीः ॥

## ॥ पदार्थदीपिका ॥

अष्टाङ्गयोगसुखसाधनहीनदृष्टि-
दूरं स्वयं सततमभ्यसने प्रभुर्यः ।
सेवे विधातृपरमाऽमृतशोभिवल्ली-
लीलाविलासरसिकं जयिनं नृसिंहम् ॥१॥

सौख्यतीर्थगतिकण्टकोद्धृतौ श्रीजयीन्द्रपदवृत्तदर्शिनी ।
तन्यते तरणितुल्यभास्वती सर्वमङ्गळपदार्थदीपिका ॥२॥

मध्वाध्वकण्टकोद्धारगतिनित्यसुखप्रदाम् ।
पदार्थदीपिकां कुर्वे वादबोधविशुद्धये ॥३॥

श्रीमत्सर्वतंत्रस्वतंत्रचतुरधिकशतप्रबन्धनिर्माणचातुरीधुरीण-श्रीमन्मध्वमतसाम्राज्यपरिपालनसार्वभौमश्रीमच्चतुष्षष्टिकलाप्रावीण्य-प्रदर्शनविस्मापितनिखिलमहीमण्डलयोगिचक्रवर्तिश्रीविजयीन्द्रश्रीमच्चरणाः, अप्पदीक्षितीय-"मध्वतंत्रमुखमर्दन"-"मध्वमतविध्वंसना"ख्य-श्लोकतद्व्याख्यारूपप्रकरणं खण्डयितुं "मध्वाध्वकण्टकोद्धारं" कर्तुकामाः, संभावितसकलविघ्ननिवारण—प्रारिप्सितपरिसमाप्ति—प्रचयाद्यभिकांक्षमाणाः, शिष्टाचाराऽनुमितश्रुतिबोधितकर्तव्यताकं मङ्गळाचरणं शिष्यावबोधनार्थं ग्रन्थादौ निबध्नन्ति—कल्याणेति–

सत्पाणिपल्लवं बाहुशाखं सद्विजसेवितम् ।
विद्याहासलतापुष्पं मध्वकल्पद्रुमं भजे ॥२॥

यस्यवाक्कामधेनुर्नः कामितार्थान्प्रयच्छति ।
सेवे तं जययोगीन्द्रं कामबाणच्छिदं सदा ॥३॥

---

कल्याणगुणपूर्णाय, श्रियःवल्लभाय, श्रीमध्वदेशिकेष्टाय ते श्रीनृसिंहाय सदा नम इत्यन्वयः। एतेन लक्ष्मीपतित्वाद्यनन्यसाधारणलिङ्गबलेन विष्णुरेवजिज्ञास्यंब्रह्म—न तु पराभिमतपार्वतीपतित्वादिलिङ्गविशिष्टशिवइति — सचनिखिलकल्याणगुणपरिपूर्णो — नतुपराभिमतं निर्गुणं ब्रह्मेति सिद्धं। सचविष्णुर्मध्वदेशिकेष्टः अतएवस्वस्यापि। सच श्रीनृसिंहरूपी। यथा सिंहनादश्रवणसमनंतरं, गजादिमृगाः, छिन्नाभिन्नाश्च दिक्षु विदिक्षु पलायन्ते, एवं निजसकलप्रमाणसनाथतत्ववादसिंहनादश्रवणानुपदं प्रतिवादिमृगा नूनं पलायेरन्निति सूचयितुं, श्रीनृसिंहनमस्कार—इत्यवधेयम् ॥१॥

पूर्णप्रज्ञान्सेवन्ते—सत्पाणिपल्लवमिति—यथा सकलसज्जनस्वानुरूपयोग्यताविशिष्टाधिकारिवांछिताऽखिलाभीष्टवितरणचतुरः कल्पद्रुमोऽप्येवमेव मध्व इत्यभिप्रायः। न च कल्पद्रुमस्सर्वेषांसर्वमनुगृह्णातीति भ्रमितव्यम्। नहि कल्पद्रुमच्छायास्थोपि मशकः स्वयोग्यताऽननुरूपसिंहभावं गजभावंवाऽभिकांक्षमाणस्सिंहोगजोवा जातुचिद्भवेत् ॥२॥

जयतीर्थगुरून्सेवन्ते—यस्येति—विषयवैराग्यपरिशुद्धान्तःकरणकलितयोगकलाप एव ब्रह्मदर्शनायाऽलमितितत्वं प्रतिपादयितुं—कामबाणच्छिद—मित्याहुः। न्यायाभासयुक्त्याभासोद्भावितपरप्रक्रियादूषणायनाऽधिकंप्रयतितव्यम्। किं तु जयतीर्थप्रबंधेष्वेव तन्निरसनं तन्निरसनप्रकाराश्चदृश्यन्तइतिगमयन्ति—कामितेति॥३॥

योऽव्यासमुनिदावाग्निस्सच्छास्त्रमरुता सह ।
ददाह कुमतारण्यं प्रकाशाय तमाश्रये ॥४॥

श्रीसुरेन्द्रगुरोः पादपद्मेरागस्य पीडनात् ।
रक्ते नखदलोपेते सेवे शिष्यालि(ळि) शोभिते ॥५॥

सर्वतंत्रस्वतंत्रेण विजयीन्द्राख्यभिक्षुणा ।
मध्वाध्वकण्टकोद्धारः क्रियते विदुषां मुदे ॥६॥

मध्वतंत्रमुखभूषणं दृढं न्यायरत्नघटनातिभास्वरम् ।
धार्यमेव सुहृशां मुदाऽनिशं तन्यतेद्य विजयीन्द्रयोगिना ॥

यद्यप्यानन्दतीर्थीयभाष्यमेवोपपत्तिमत् ।
न तु भाष्यान्तराणीति दर्शितं मम देशिकैः ॥८॥

---

व्यासतीर्थान्नमंति—यइति—स्पष्टोऽर्थः ॥४॥

स्वगुरून्नमंति—सुरेन्द्रेति—स्पष्टोऽर्थः ॥५॥

ग्रन्थरचनप्रतिज्ञांप्रतिजानते—सर्वतंत्रस्वतंत्रेणेति·–मध्वदेशिकेन्द्रैः प्रदर्शितः, अध्वा, सकलसत्प्रमाणसनाथप्रस्थानत्रयविवरणप्रकाशितब्रह्मस्वरूपध्यानलब्धप्रसादसमधिगतस्वानन्दानुभवरूप - मुक्तिमार्गः । मार्गेकण्टकाः, अप्पदीक्षितादयः, विदुषांमुदेतदुद्धारः क्रियतइत्यन्वयः । विदुषामितिनिर्मत्सरपारमार्थिकविद्वत्समुदायो- विवक्षितः, न तु पण्डितंमन्यज्ञानलवदुर्विदग्धप्रतिवाद्यद्वैतिसमुदायः, यस्यसर्वदाखेदाऽसूयापराजयपलायनादिकमेवेतिभावः ॥६॥

स्वग्रन्थनामनिर्दिशंति–मध्वतंत्रमुखभूषणमिति–मध्वतंत्रमुखमर्दनस्यप्रतिभटोमध्वतंत्रमुखभूषणमेव । नामचेदमन्वर्थतारामणीयकादिमनोहरम् ॥७॥

निजग्रन्थकरणप्रयत्नस्सफलएवेति स्थापयंति—यद्यपीत्यादि श्लोकद्वयेन । यद्यपि देशिकैःव्यासतीर्थैर्मध्वभाष्यमेवोपपत्तिमन्नभा-

तथाप्याधुनिकोक्तानां दूषणानामलग्नताम् ।
प्रदर्श्य गुरुपादोक्तिमहिमात्र प्रकाश्यते ॥९॥

---

गंगासंगेन यथा रथ्याद्भिर्लभ्यतेत्र नैर्मल्यम् ।
एवं मदीयवाग्भिर्जयीन्द्रतीर्थीयवचनसंगेन ॥१॥

---

॥ श्रीः ॥

## ॥ प्राचीनकण्टकोद्धारः ॥

भजन्तु ब्रह्माख्यं सगुणमथवा वस्तु विगुणं
कथं स्यादिष्टं तत्सगुणमपकृष्टं मतिमताम् ।
विरोधाः सन्त्येव क्षरति नहिनिन्दानयजलं
श्रुतीनां सूत्राणां भवति च निरस्याऽन्यघटना ॥१॥

---

ख्यान्तराणीति दर्शितम् । तथाप्याधुनिकोक्ततुच्छतमदूषणनिरासश्च तदातदा कर्तव्यएव स्वपक्षस्थापनायेति प्रकृतएषप्रयासस्सार्थक-एवेति भावः ॥८—९॥

श्रीविजयीन्द्रकृतमङ्गळाचरणपद्यानि किमित्यत्रनिवेशितानीत्यत आह—गङ्गासंगेनेति—स्पष्टोऽर्थः ॥१॥

निर्विशेषब्रह्मबोधकशास्त्रस्य शिवोविष्णुर्वा भवतु विषयस्त-दिष्टमेवेत्यादिचोद्यं निराह—भजन्त्विति—सगुणं कथमिष्टंस्यात् ? तदपकृष्टंखलु । निर्विशेषब्रह्मसत्तान्यूनसत्ताकमितियावत् । अत एव ज्ञानजन्यध्वंसप्रतियोगि । अन्येपि विरोधास्सन्त्येव । नहि निन्दान्यायश्च जलमिव क्षरति । श्रुतिसूत्राद्यन्यघटना निरस्यैव । शारीरकमीमांसाशास्त्रस्य त्वद्गुरभिमानैकसिद्धनिर्विशेषब्रह्मपरत्वं यदि स्यात्तदोपासनार्थं सगुणमिष्टमित्यादिकल्पनास्यात् । तस्यचाद्याप्य-सिद्धेरितिन्यायप्राप्ताऽनिष्टस्येष्टत्वकथा तवप्रेक्षावत्कोटिबहिर्भूततामेव-

एवमानन्दतीर्थीयं मतं प्रेक्षावदाश्रितं ।
वेदवैदिक(वेदान्त)सन्न्यायतत्वं यत्रैव निश्चितम् ॥२॥

माध्वपश्चाधिकरणी मायिपश्चत्वकारिणी
भातिमुक्त्येकनिःश्रेणी स्रुतिदुःखनिवारणी(संस्कारवारणी)

पश्चाधिकरणीद्वेषिदीक्षितप्रोक्तदूषणं ।
निरस्यतेत्र सन्न्यायैर्मुक्तियोग्यैकतुष्टये ॥३(ख)॥

अस्माकं पूर्वपक्षो भवति परमतं तेन सिद्धान्तितंचे-
त्काऽऽक्षेपो ब्रूहि लोके गुरुनतिविषयः पैतृकाऽपूपभोक्ता ।
तस्माच्छिष्यस्य नम्यो नभवति जडधीस्सर्वशास्त्रार्थवेत्तुः
श्रौतं त्वन्निर्विशेषं निरसनविषयं न्यायदृष्ट्ये(रीत्ये)तिपश्य॥

---

स्फुटयतीति भावः। सगुणस्येष्टत्वे त्वया शपथेन साधितेपितवा-ऽनिष्टमेव । ज्ञानत्वेनवा साक्षात्कारत्वेनवा ज्ञानजन्यध्वंसप्रतियोगित्वात् । मिथ्यात्वात् । अध्यस्तत्वेनाऽनर्थहेतुत्वादितिदिक् ॥१॥

आनन्दतीर्थीयमेव मतं प्रेक्षावदुपादेयं, सकलश्रुतिसत्प्रमाण-बलन्यायोपबृंहणादिमत्त्वादित्याह—एवमिति ॥२॥

स्वाभिमतपश्चाधिकरणीं निर्दिशति—माध्वेति—सृतिसंस्कार-वारणीति पाठे पराभिमतजीवन्मुक्तिकल्पनमप्रामाणिकमितिभावः ॥

कर्तव्यं प्रतिजानीते—पश्चेति ॥३—(ख)॥

मध्वमते जिज्ञासाधिकरणपूर्वपक्षस्सुस्थ इत्याह—अस्माक मिति—तेन, परकीयेन, सिद्धान्तितं, परमतमद्वैतमस्माकं पूर्वपक्षो-भवति । अत्रकाऽऽक्षेपोब्रूहि । लोके तावद्गुरुशिष्यनम्यनमनशीला-दिव्यवस्थायां विचार्यमाणायां, स्वगुरुनतिविषयः परमगुरुः, केवलं भ्रान्तः पैतृकाऽपूपभोक्ताचेत्तादृशः, जडधीः, सर्वशास्त्रार्थवेत्तुश्शिष्यस्य नम्यो नभवत्येवेति तवचोद्यं, बालबालिशप्रलपनमेवेति भावः ।

शास्त्रं नारंभणीयं विषयविरहतः ब्रह्मतर्कप्रसिद्धे
मानत्वे रक्षणीयेप्यनधिगतफले शोभते पूर्वपक्षः।
तत्वंचेन्निर्विशेषं तदपिच विदितं स्वप्रकाशं च सर्वैः
संदेहः क्वाऽन्यथात्वं भवति नयविदामाश्वनारंभहेतुः
(बीजम्) ॥५॥

यद्यप्येषोत्रसाक्षी भवति बहुमतो मानकक्षासु नित्यं
योग्यत्वं तत्रबोध्यं श्रवणमननसच्छिष्यगुर्वादिचिन्ता।
व्यर्था ते शिष्यशङ्का नगलति सततं शास्त्रतत्वार्थबोधे
वादोजल्पोवितण्डा कथकमतमिदं पूर्वपक्षोतिशुद्धः॥६॥

---

तस्मात्श्रौतत्वेन त्वदभिमतं निर्विशेषं ब्रह्म न्यायदृष्ट्या निरसनविषय इति पश्य। तथा च, श्रौतमितिपरकीयदुरभिमानमात्रसिद्धं निर्विशेषमवलम्ब्यसाधीयानेव पूर्वपक्षः॥४॥

वेदान्तानां ब्रह्मतर्कसिद्धप्रामाण्यनिर्वाहायाऽनधिगतविषयत्वं समर्थनीयमित्यादिप्रलापं निरस्यति—शास्त्रमिति—ब्रह्मतर्कप्रसिद्धे, अनधिगतफले, मानत्वे रक्षणीयेपि, विषयविरहतश्शास्त्रं नाऽऽरंभणीयमिति पूर्वपक्षश्शोभते। निर्विशेषमेव तत्वं चेत्तदपि स्वप्रकाशतयासर्वैर्विदितं चेन्नयविदामनारंभहेतुत्वेन प्रथितः क्व संदेहः? क्वाऽन्यथाभावः? संदिग्धविपर्यस्ताऽन्यतरंप्रत्येव शास्त्रस्य प्रवर्तनीयत्वात्। तस्मात्सर्वथापि परीत्या विचारशास्त्रस्याऽनारंभणीयत्वरूपपूर्वपक्षोपपादनं नप्रामाणिकमिति सिद्धम्। अस्मत्पूर्वपक्षे न काप्यनुपपत्तिः॥५॥

साक्षिप्रमाणमपेक्ष्य पूर्वपक्षो न युज्यते। योग्यशिष्यशङ्काभावादपीति चोद्यं निराह—यद्यपीति—साक्षी, मानकक्षासु बहुमतो भवति। तत्रयोग्यत्वं बोध्यं। साक्षीस्वाऽयोग्यं न गृह्णाति। अस्मन्मते स्वारसिकशिष्यशङ्काऽस्ति। नत्वन्मते। वादोजल्पोवि-

भ्रान्तास्त्वय्यन्तमार्गे कलुषितधिषणाः ब्रह्मतन्निर्विशेषं
जल्पन्ति क्षुद्रचित्तास्तवविदितमिदं सर्वशास्त्रैकगम्यम् ।
तत्सिद्धं जीवरूपं(तत्सिद्धो जीवभावः) भवति वद कथं
[पूर्वपक्षस्यसिद्धिः
शास्त्रारंभप्रयासस्तव ममच समः किं वृथा रोदिषित्वम् ॥

वाचस्पत्युक्तमार्गे विवरणभणितावंश एकस्तु सिद्धः
नाऽन्योव्याघातशङ्कानभवतियदुभौ हन्तसिद्धान्त्यभीष्टौ॥
मैवं व्याघातदोषः स्फुरति तव मते नास्मदीये यदाद्ये
राद्धान्तांशस्त्वदीयो घटितइति जडोन्मत्तवाक्येन किं मे ॥

---

तण्डेतिकथकसंप्रदायः । सर्वत्राऽस्मन्मत एव सामञ्जस्यं । त्वन्मते शिष्यशङ्कैवनोदेति । यदिशपथपूर्वकमेवोदेति न कदापि निवर्तेत । निर्विशेषचिन्मात्रस्याऽहंधीसिद्धत्वात् । तस्मात्त्वमते पूर्वपक्षस्यकथमप्यनुत्थानमेव । अस्मन्मते तु पूर्वपक्षोऽतिशुद्धः । स्वारसिकः ॥६॥

निर्विशेषजीवस्वरूपप्रतिपादकशास्त्रसत्वाऽसत्वाऽन्यतरकोटिपरामर्शेनापि न तव पूर्वपक्षः व्याघातादितिकुचोद्यं निराह— भ्रान्ता इति । अस्त्येवाऽद्वैत्यभिमतं तादृशं शास्त्रमिति न व्याघातः । किंच निर्विशेषस्य जीवस्य सिद्धतया तव पूर्वपक्षस्योत्थितिः कथं ? । वस्तुतस्तु शास्त्रारंभप्रयासस्तव मम च समः । यदिव्याहतिरस्मत्पूर्वपक्ष आपाद्यते तवापि सास्त्येव । तस्माद्व्याहतिदोषान्धस्त्वं सर्वमन्धकाराघृतं शून्यं च पश्यसीति न चित्रम् ॥७॥

तत्पक्षीयव्याहतिपरिहारोद्यमंखण्डयति—वाचस्पत्युक्तमार्ग इति । वाचस्पतिपूर्वपक्षे, विवरणपूर्वपक्षे चांश एकस्सिद्धः, अन्यस्त्वसिद्ध इति, उभावप्यंशौ सिद्धांत्यभिमताविति न व्याहतिरितिचेन्मैवं । व्याघाततादवस्थ्यात् । पूर्वपक्षेयः, अंशः, सिद्धत्वेन सिद्धांत्यभिमतः, यश्चपूर्वपक्षप्रवर्तकः, यश्चशास्त्राऽनारंभणीयत्वशङ्कोदय-

सुस्थोऽस्मत्पूर्वपक्षः प्रतिहतिरहितन्यायलेशावलम्बी
सर्वन्यायाऽनपेक्षोविलसति रचना जैमिनीयाद्यसूत्रे ।
व्याघातोजैमिनीये न भवति यदिचेदस्मदीये कथं स्या-
देकन्यायावतारे कथय सुखमतद्वेषकालुष्यशालिन् ॥

जागर्त्येवात्र शास्त्रं किमपि तव मतं वक्तिपुङ्खानुपुङ्खं
वेदान्तानामखण्डे विरतिमविकलां जीवरूपेऽविशेषे ।
आक्षेप्याद्ब्रह्मशास्त्रात्सुखमुनिमहितादस्मदीयाद्विभिन्नं
तस्मान्नव्याहतिर्वा नखलुमृदुलता मन्मतीयाद्यपक्षे ॥

---

हेतुः, यश्चांशस्सिद्धान्तप्रवर्तकतयाभिमत इत्यादिकल्पनाया एव व्याघातमातृपितृकत्वात् । तस्मादस्मदीयाद्यपक्षे त्वदीयराद्धान्तांशो-घटित इति न व्याहतिरस्मान् स्पृशेत्तव तु व्याघातोदुर्वार इति भावः ॥८॥

जैमिनीयाऽऽद्याधिकरणीयाऽऽद्यपक्षे यदि न व्याघातस्तर्हिना-ऽस्मन्मताद्यपक्ष इति प्रतिबन्दीमुद्घाटयति—सुस्थ इति । प्रतिहति रहितलाघवाख्यन्यायलेशावलम्बी तत एव सर्वन्यायाऽनपेक्षः सुस्थो-ऽस्मत्पूर्वपक्षः । इयं रचना जैमिनीयाद्यपक्षेविलसति । यदि जैमिनीये न व्याघातः कथमस्मदीये? सर्वत्र पूर्वपक्षप्रवर्तकस्तु विचारशास्त्रस्य सिद्धान्त्यभिमतार्थभिन्नार्थविश्रांतिविशिष्टाऽन्यपरतान्यायस्त्वेक एव। संभाविताऽन्यार्थताप्रकाराश्च बहवः । तस्मान्मध्वमतद्वेषकालुष्यशा-लिन्! कथय कथं जैमिनीयाद्याऽऽद्यपक्षे न व्याघातः, परंत्वस्म-दीय एवेति ॥९॥

आक्षेप्याद्ब्रह्ममीमांसाशास्त्रादस्मदभिमतादस्तिकिंचिच्छास्त्रं नि-र्विशेषपरं यदालम्ब्य पूर्वपक्षः प्रवर्ततेत्याह—जागर्तीति । तस्मान्न-व्याघातः, नाप्यस्मन्मतीयाद्यपक्षेमृदुलताद्यापादनं सुशकमितिभावः॥

भवति यदि शास्त्रविषयोजीवोऽहंस्वप्रकाश इति विदितः।
अधिगत एवं भूतोऽसंदिग्धः का कथा विचारस्य ॥११॥

जीवस्वरूपं इति शास्त्रबलेनसिद्ध
आनन्द आवृतिमितः कमलेशशक्त्या।
श्रीशप्रसादसुलभा खलु तन्निवृत्ति-
र्मत्प्रक्रियैव महिता रहितानुवादा ॥१२॥

मते तावकीने प्रकाशाश्रयस्य
प्रकाशोपरोधो न शक्योपपादः।
स्वरूपप्रकाशेऽप्यथाऽऽनन्दरोधो
विशेषस्य शक्त्या मते मामकीने ॥१३॥

---

परमते कथमपि विचारस्य नाऽवकाश इत्याह—भवतीति। निर्विशेषाऽभिन्नोजीवोहमितिस्वप्रकाशतयाविदितः यदिशास्त्रविषयो-भवति तव मते का कथा विचारस्य? नकापि। यत एवं भूतो जीवोऽसंदिग्धोऽधिगतश्च। तस्मात्तव मते शास्त्रारंभसमर्थनं सर्वथापि दुश्शकमिति भावः ॥११॥

जीवानन्दाऽऽवरणस्यास्मदभिमततया तदावरणेन जीवस्या-ऽनधिगतत्वं स्यादितिचोद्यं निराह—जीवस्येति। अस्मन्मते कम-लेशशक्त्या आनन्द आवृतिमितः। तदावरणनिवृत्तिश्चश्रीशप्रसाद-सुलभेतिप्रक्रिया स्यात्। प्रमाणविरोधचर्वितचर्वणादिरहिता। नत्व-न्मते निर्विशेषैकात्म्यवादे ॥१२॥

निर्विशेषाऽभेदवादे प्रकाशमानस्य कथमप्यप्रकाशमानत्वं न संजाघटीतीत्याह—मत इति। अस्मन्मते विशेषबलेन जीवा-नन्दावरणं सूपपादं। न निर्विशेषात्मैक्यवादे ॥१३॥

अस्मन्मते संसारदशायां जीवस्य ब्रह्मदर्शनरोधः प्रामाणिक

संसारस्थं जीवचैतन्यमेत-
न्नालं विद्धि ब्रह्मतद्धर्मदृष्ट्यै ।
भेदःसुस्थोप्येवमस्मद्विशेषोऽविद्या
दुष्टा हृद्गता तेऽन्धशास्त्रे ॥१४॥

मदभिमत इदानीमीशजीवादिभेदो
न तव जड विशेषोऽविद्यया नैव तुल्यः ।
भवति तव विचारोनिर्विशेषस्य भानं
विहितविषयशून्यश्शून्यवादैकमान्यः ॥१५॥

कथं शास्त्रे भूयात्सकलगुणहीनं तु विषयो
जडोन्मत्तान्धोक्तिर्भवतु सगुणं शास्त्रविषयः ।
यतस्तद्ब्रह्माख्यं वदसि परमध्यस्तमगुणे
न लाभो नोशास्त्रं न तव विषयो नाधिकृतिमान् ॥

---

इत्याह—संसारस्थमिति—एतत्संसारस्थं जीवचैतन्यंब्रह्मतद्धर्मदृष्टयै नालमिति विद्धि । एवमेवभेदःसुस्थः । विशेषोपि । ते अन्धशास्त्रे तव हृद्गताऽविद्या दुष्टा सकलप्रमाणबाधिता । तस्माद्विद्यामहिम्ना प्रकाशमानस्याऽप्रकाशनमस्त्वित्यादिकल्पना निरस्ता। विशेषस्सकलपारमार्थिकप्रमाणसचिवः। अविद्या प्रमाणहीना। 'अज्ञताऽखिलसंवेत्तुर्घटतेनकुतश्चने'तिभगवत्पादोक्तदूषणं वज्रलेपायते ॥१४॥

विचारशास्त्रविषयत्वादिकं भेदविद्यायामेव घटने न निर्विशेषाऽखण्डचैतन्यवाद इत्याह—मदाभिमत इति—मदिष्ट ईशजीवभेदोन तव। विशेषश्चाऽविद्यया नैव तुल्यः। निर्विशेषस्य भानं नोपपद्यते। तवविचारः विहितविषयशून्यः शून्यवादैकमान्योभवति ॥

परमते सगुणस्य विचारविषयत्वं न संभवतीति विशदयति—कथमिति—कथं शास्त्रे निर्गुणं विषयःस्यात्? सगुणं शास्त्रविषयो-

एवमाद्याधिकरणपूर्वपक्षे सुस्वाहृते ।
नारंभणीयं शास्त्रं यद्विषयोनेति शोभते ॥१७॥

---

## ॥ सिद्धान्तः ॥

शक्तोयं ब्रह्मशब्दः श्रुतिगतिमहितः पूर्वपक्षं निषेद्धुं
सर्वप्राबल्ययुक्तोविधिवचनगतोऽद्वैतरीतिप्रसिद्धं ।
सिद्धान्तश्शास्त्रयोनिप्रभवति च यथा ब्रह्म तद्वीक्षणेन
स्पष्टेयं शाङ्करीया मम भवतु तथा योजना ब्रह्मशब्दे ॥

---

भवत्विति चेज्जडोन्मत्तान्धोक्तिस्सा यतस्सगुणं ब्रह्म निर्गुणेऽध्यस्तं वदसि । तस्मात्तवशास्त्रे नलाभः, नापिशास्त्रत्वं, नविषयः, नाधिकारीतिसिद्धं । अध्यासपरंपरैकनिर्वाह्यशास्त्रप्रक्रियामन्धेनैवनीयमाना अन्धा एवोपाददीरन् न प्रेक्षावन्त इति सिद्धम् ॥१६॥

मध्वमते सुस्थःपूर्वपक्ष इत्याह—एवमिति—शास्त्रंनाऽऽरंभणीयं, विषयाभावादितिमध्वाहृतं आद्याधिकरणीयाद्यपक्षवर्णनं सर्वप्रमाणसिद्धमितिभावः ॥१७॥

---

## ॥ सिद्धान्तः ॥

गुणपूर्णत्वनिमित्तकोपिब्रह्मशब्दः पूर्वपक्षप्रतिभटोनभवतीत्याक्षेपं खण्डयति-शक्त इति—श्रुतिन्यायबलोपेतोयं ब्रह्मशब्दःप्रसिद्धाऽद्वैतिरीत्याश्रयणेन रचितं पूर्वपक्षं निषेद्धुं प्रभवति, यतोनिरर्गलनिष्प्रत्यूहनिपुणतमबलविशिष्टविधिवचनगतः । तस्माद्यथातवेक्षणेन ब्रह्म शास्त्रयोनीति सिद्धान्त एवं ममापीहाऽस्तु । इयं शाङ्करीया योजना स्पष्टा । सा मम ब्रह्मशब्दे भवतु ॥१८॥

उत्पत्तिशिष्टप्राबल्यन्यायावतारेण ब्रह्मशब्दस्यपूर्वपक्षप्रतिभटत्वं

अज्ञातज्ञापकत्वान्नयसरणिविदोत्पत्तिशिष्टा बलिष्ठा
ज्ञातादुत्पन्नशिष्टादितिसकलगुणैः पूर्णता ब्रह्मणोस्ति ।
आग्नेयादाविवात्र स्फुरति विधिरयं जागरूकोविशिष्टः
पूर्णःसर्वैर्गुणैश्चेद्गुणिनि बहुमता ब्रह्मशब्दप्रवृत्तिः ॥१९॥

ब्रह्माऽऽढ्यंसकलगुणैः कदापिजीवो
नाऽऽढ्योल्पोभवति च भेद एव सिद्धः ।
ऐक्यंस्यादनुभवमानहीनमेत-
त्पूर्णत्वं कथमिव सद्भिराद्रियेत (चाद्रियेतजीवे) ॥

निरवधिमहैश्वर्यः श्रीशः समस्तविलक्षणः
प्रभुरिति भवेदेकोऽनेको न तत्र विरोधधीः ।
न भवति तथात्यल्पोजीवोविशेषबलादपि-
प्रचुरधिषणैर्भेदः प्रोक्तोविरुद्धगुणाश्रयात् ॥२१॥

---

स्थापयति—अज्ञातज्ञापकत्वादिति—ब्रह्मणस्सकलगुणैः पूर्णता, अज्ञातज्ञापकत्वान्नयसरणिविदा लोकेनोत्पत्तिशिष्टा, ज्ञातादुत्पन्न शिष्टाद्बलिष्ठा स्वीकृता। यतोवेत्यत्रयदाऽऽग्नेयादिवाक्य इव विशिष्ट-विधिः जागरूकःस्फुरति। यदागुणीसकलगुणपूर्णस्तदागुणगतं बृहत्वं गुणिनि ब्रह्मशब्दप्रवृत्तिनिमित्तं भवत्येवेति भावः ॥१९॥

गुणपूर्तिवाचकब्रह्मशब्दः पराभिमताभेदं निराकरोतीत्याह—ब्रह्मेति—ब्रह्माऽऽढ्यं सकलगुणैः। कदापि जीवो न। तस्माद्भेद एव सिद्धः। ऐक्यमनुभवमानहीनं। जीवे कथं गुणपूर्णत्वमाद्रियेत?। अभेदे ब्रह्मगतगुणपूर्णत्वानुसन्धानंस्यात्। तदभावात्तयोर्भेद एव सिद्ध इति स्थितम् ॥२०॥

गुणपूर्णत्वाऽल्पगुणत्वयोर्विरुद्धयोर्जीवेशभेदसाधकत्वं दुरपह्नवमिति प्रतिजानीते—निरवधिमहैश्वर्य इति—ईश एकोपिस्या-

विशेषोजागर्ति प्रथितगुणगुण्यादिविषये
न नानेहास्तीतिश्रुतिपरमतात्पर्यघटने।
परं जीवेशैक्यश्रुतिरखिलसाक्षिप्रतिहता
विशेषोऽस्तिश्रुत्योरिति तव दुराशा न फलिनी॥

एकं ब्रह्म त्वदीयेबहुशिथिलमते तस्यनानात्मता(वा(भावः)
सर्वव्याप्त्या विभुत्वं कथमणुभवनं हार्दकोशे च जीवे।
भूयादाविद्यकं तन्निखिलमपि मिथोवस्तुगत्याविरुद्धं
द्वेषोयं ते विशेषे कथमिव घटते श्रीशशक्ताविदानीम्॥

---

ऽचिन्त्याऽद्भुतमहिम्नाऽनेकोभवति विश्व-तैजस-प्राज्ञादिरूपैः। न तत्र विरोधधीः। नैवं स्वकीयमहिम्नावा, विशेषविलासेनवेश्वरोऽत्यल्पो जीवो भवेत्। अल्पे जीव इति पाठे गुणपूर्त्यल्पगुणत्वे विशेषबलादपि न भवत इति विभावनीयम्। तस्माद्विरुद्धगुणाश्रयात् जीवात् प्रचुरधिषणैर्भेद एव राद्धान्तित इति भावः॥२१॥

विशेषमहिम्ना विष्णुर्जीवभावमापद्येतेतितुच्छचाद्यं निराह—विशेष इति—गुणगुण्यादि विषये, "नेहनानाऽस्ती"ति श्रुतिमुख्य· तात्पर्यघटेन विशेषो जागर्ति। जीवेशैक्यश्रुतिरखिलसाक्षिश्रुति-प्रतिहतेति जीवेशैक्ये न विशेषः प्रवर्तते। ब्रह्मस्वगताभेदश्रुतयो-मानान्तरविरोधरहिताः। जीवेशाऽभेदश्रुतयस्तुमानान्तरविरोधप्रति-हताः। तस्मात्सिद्धोजीवेशभेदः। तद्विघटने विशेषो न प्रवर्तते। यतो न प्रभवति। अस्तिश्रुत्योरेवं विशेष इति तव दुराशा न फलिनी॥२२॥

विशेषाङ्गीकारो न व्यर्थ इति परमतीयस्फुटविरोधप्रदर्शनपूर्व-कमुपपादयति—एकमिति—एकं ब्रह्म, तस्य नानात्मताकथं? विभुत्वं कथं? कथं चाणुभवनं? मिथोवस्तुगत्या विरुद्धं तन्नि-खिलमपि भूयादाविद्यकमिति चेद्विशेषे द्वेषोयं ते कथमिव घटते?

काचित्कींभेदकार्यव्यवहृतिमनिशं साधुकुर्वन्विशेषः
धर्मा बुद्धा विरुद्धा भगवति सुतमां तेषु निर्वाहशाली ।
आपाद्यं नैव विद्वन्गुणगुणिषुमतं पश्यसंयोगमेनं
तस्मात्सुस्थोविशेषः परकथितबहुक्षुद्रदोषप्रमुक्तः ॥२४॥

आत्मीयं सौख्यदुःखाद्यखिलमभिहितं तात्विकं जैवमेव-
स्वातंत्र्यं श्रीशानिष्ठं परममनुपमं श्रैष्ठ्यसाम्यादिमुक्तम् ।
स्वामित्वं भाति जीवे जगदुदयगतिध्वंसकर्तृप्रदत्तं
तस्मान्नेच्छेद्रमेशोनिरयजनमतं जीवभावं कदापि ॥२५॥

दुःखित्वं हेयमेवस्फुटमुदितमहो नीचता तत्प्रयुक्ता
हेयं नैवं सुखित्वं विशदमभिहितोत्कृष्टता तत्प्रयुक्ता ।

---

ईश शक्तौच । अविद्यया सर्वनिर्वाहे साध्ये कारणमात्रोच्छेद प्रसङ्गात् ॥२३॥

विशेषः क्वचिद्भेदकार्यव्यवहृतिनिर्वाहंभगवति विरुद्धधर्म निर्वाहं साधुकरोतीत्याह—काचित्कीमिति—विशेषः क्वचिद्भेद कार्यव्यवहृतिं साधुकुर्वन्, भगवति ये धर्माः, विरुद्धाः बुद्धाः, एकत्वाऽनेकत्वादयः, तेषु सुतमां निर्वाहशाली भवति । नैवं गुण-गुणिषु संबंध आपाद्यः । अन्यत्सुगमम् ॥२४॥

ईश्वरः कदापि कथमपि जीवभावं नाऽनुमन्येतेति प्रति-जानीते—आत्मीयमिति—सौख्यदुःखाद्यखिलं यदभिहितं, तत्ता-त्विकमेव जैवमात्मीयतयाऽनुभूतम् । श्रीशानिष्ठं स्वातंत्र्यं साम्या ऽऽधिक्यरहितं, परममनुपमं खलु । जीवे च जगदुदयस्थितिध्वंसकर्तृ श्रीशप्रदत्तं स्वामित्वं भाति । तस्मादीश्वरो निजस्वातंत्र्यादिहानेन दुःखादिकलुषजीवभावं नाऽनुमन्येतेति सिद्धम् ॥२५॥

पूर्वोक्तमर्थमेवप्रकारांतरेण साधयति—दुःखित्वमिति—दुःखि-त्वंहेयं, तत्प्रयुक्तनीचताचहेया । सुखित्वं न हेयं, तत्प्रयुक्तो-

तत्कार्ये न प्रसिद्धं प्रभवसि यदि तद्बोद्धुमत्यन्तमूढः
लोकव्यापारशक्तिर्नतव विभुजगत्सृष्टिचिन्ता कथं
[स्यात् ॥२६॥

शम्भुस्तवप्रियतमोनटनैकशीलः
रुद्रस्य रुद्रपदवी श्रुत(खलु)रोदनेन ।
तद्रोदनं च नटनं तदुपासकस्य
भूषा तवैव न ममेति जगत्प्रसिद्धम् (विदांकुरुष्व) ॥

जिज्ञासावाक्यसंस्थोभवति गुणगणाऽऽढ्याऽर्थकोब्रह्मशब्दः
शक्तोजीवेशभेदं गमयितुमपिच श्रूयतामस्तिमार्गः ।
अन्यस्सर्वश्रुतीनां प्रबलतमनयैर्वेद्य एकोमुकुन्दः
पक्षस्याद्यस्य तस्मात्प्रतिभटघटना ब्रह्मशब्दे मनोज्ञा ॥

---

त्कृष्टताच न हेया । एवमेव सुखदुःखकार्ये । प्रसिद्धमपीममर्थमत्यन्त मूढस्त्वं बोद्धुं न प्रभवसि यदि तदा तव लोकव्यापारनिर्वाहशक्तिरपि नूनं न विद्यत इति कथंकारं तवेश्वरजगत्सृष्ट्यादिव्यापारचिन्ता ? ॥

नाऽस्माकं कथमपि पिशाचभावापादनं, परंतु रोदनपैशाचिकनर्तनादि परस्यैवेति प्रतिपादयति-शम्भुरिति-तव प्रियतमः, शम्भुर्नटनैकशीलः । "सोऽरोदी"दितिरुद्रस्य रुद्रत्वं श्रुतिप्रतिपादितरोदनलिङ्गेन । तस्माद्रोदनं नटनं च तवैव भूषणमिति साधुसंगच्छते, न मम । शङ्करगणांशस्य दीक्षितस्य तद्भूषणकर्तॄणां च पिशाचभावपिशाचपक्षपातित्वादिसार्वजनीनबुद्ध्यारूढमिति न प्रातिस्विकेन रूपेणोपश्लोकितामिति सुधियोविदांकुर्वन्तु ॥२७॥

जिज्ञासाधिकरण एव जीवेशभेदप्रतिपादनं युक्तमित्याह—जिज्ञासा वाक्यसंस्थ इति-गुणपूर्णाऽर्थको ब्रह्मशब्दो जिज्ञासावाक्यगतः, स च जीवेशभेद गंमयितुं शक्तः । उत्तरत्राश्रितोन्यः

प्रत्यक्षंचानुमानं श्रुतिरितिसततं ज्ञाऽज्ञभेदे प्रमाणं
सत्याधर्माविरुद्धाः खलु भवति भिदा जीवविष्ण्वोरवद्यम्।
स्यादीशो जीवभावः वृजिनकलुषितस्त्वीशभावोपि जीवे
तस्मादात्मैक्यवादस्सुगतमतसमोमानशून्याग्रगण्यः ॥

प्रत्यक्षादिविरोधदर्शनवशान्नात्मैक्यलाभो भवे-
दात्मैक्यश्रुतयो बलेन रहितास्ताः ब्रह्मभेदोन्मुखाः ।
प्राबल्यं भवति श्रुतेर्वदति या जीवेशभेदं परं
ब्रह्माऽभेदमपीतितात्विकमते जीवेशभेदः स्थिरः ॥३०॥

आद्याख्यतंत्रपरिशोधितमानभूत-
शब्दान्तरादिविदितः खलुमुख्यभेदः ।

---

कोप्यस्तिमार्गः प्रसिद्धः । द्वैताऽद्वैतसकलश्रुतिप्राबल्यदौर्बल्यन्यायानुसंधानसनाथपारमार्थिकविमर्शेन मुकुन्द एवाऽखिलश्रुतिवेद्य इति निपुणतमं निरणायि । तदातदा निर्णीयते च । तस्मादेकेन ब्रह्मशब्देन सर्ववेदान्तावलम्बिपूर्वपक्षप्रतिभटघटना मनोज्ञा ॥२८॥

जीवेशभेदे प्रमाणं दर्शयति–प्रत्यक्षमिति–प्रत्यक्षमनुमानं श्रुतिरिति जीवेशभेदे प्रमाणं । ईशे जीवे च सत्याः विरुद्धाः, धर्माः । तन्मूलकश्चतयोर्भेदः । ऐक्यवादे परमीशेवृजिनकलुषजीवभावप्रसङ्गः । जीवे चेशभावप्रसङ्गोदुर्वारः । तस्मादात्मैक्यवादः प्रमाणशून्यस्सुगतमतसम इति प्रेक्षावद्भिरुपेक्षणीय इति भावः ॥२९॥

भेदश्रुतिप्राबल्यं व्यवस्थापयति—प्रत्यक्षादिविरोधदर्शनवशादिति—पूर्वोक्तप्रमाणविरोधेनात्मैक्यलाभो न भवेत् । अत्रायं निष्कर्षः—आत्मैक्यश्रुतयश्च, ब्रह्मभेदश्रुतयश्च बलेन रहिताः । एवं या श्रुतिर्जीवेशभेदं परं वदति, ब्रह्माऽभेदमपि, तच्छ्रुतेः प्राबल्यं भवति । एवं तात्विकमते जीवेशभेदःस्थिरः ॥३०॥

शब्दान्तरादिकमपि जीवेशभेदे प्रमाणमित्याह—आद्येति–

हासोपहासगजविप्रपवित्रकेलिः
शोभैव रासभगजादिचिदैक्यवक्तुः ॥३१॥

विद्याभेदेन नस्याद्गुणगतिकथनं सर्वविद्यासुसत्यं
यस्मात्तत्राधिकारः स्फुरति तनुभृतां देवतानां विमुक्तौ।
हन्ताऽद्वैतश्रुतीनां कथमपि नभवेज्जन्मलाभोविचारे
जीवस्येशांशभावो न हि तव सुलभोरासभांशस्यलाभः॥

मानैस्सिद्धे ब्रह्मजीवप्रभेदे
ज्ञेयं सुस्थं तद्विचारार्थशास्त्रम्।
भेदाऽभावेनाऽज्ञतानोविचारः
शून्यादन्यन्नास्तिविद्वन् गतिस्ते ॥३३॥

---

पूर्वतन्त्रपरिनिष्पन्नप्रमाणभूतशब्दान्तरादिभिरपिमुख्योजीवेशभेदो विदितः। न काल्पनिकः। रासभगजादि चिदैक्यवादिनो गज विप्रपवित्रघासहासोपहासादि तवैव शोभा, नत्वस्माकमिति भावः॥

न कथमपीशस्य जीवभाव इति सिद्धांतयति–विद्याभेदेनेति–दहरादिविद्यासु प्रतिप्रकरणं गुणगतिकथनं, न विद्याभेदेन, किंत्वधिकारिभेदेन, यतस्तत्राऽधिकारः स्फुरति। अद्वैतश्रुतीनां त्वदुक्तरीत्या लब्धस्थितिकत्वाऽभावेन, जीवानां न कथमपि वासुदेवांशलाभः, किंत्वाऽऽत्मैक्यवादिन आत्मैकत्वविद्यापरिनिष्ठितस्य तव रासभांशस्यलाभो निष्प्रत्यूह इति सोपहासं परपक्षमधिक्षिपति। अंशस्यलाभ इत्यपिन–सर्वदेशकालवस्तुपरिच्छेदातीतसत्तामात्रस्फुरणचिद्रासभस्त्वमेवेति भावः ॥३२॥

प्रमाणप्रतिपन्नाऽधिकरणनिर्गलितार्थं निगमयति–मानैरिति–एवं प्रमाणैर्जीवब्रह्मप्रभेदे, सिद्धे, तद्विचारप्रयोजनं शास्त्रं, सुस्थं ज्ञेयं। भेदाऽभावे, तवैक्यवादे, नाऽज्ञता, न विषयः, नापि विचारः। तस्मान्नप्रयोजनमिति, विद्वन्!!! शून्यादन्यन्नास्ति ते गतिः ॥३३॥

नागराजरचना विभाव्यतां
मध्वतंत्रगतिकण्टकोद्धृतौ ।
पाटितः प्रथमसूत्रकण्टको
मुक्तियोग्यनृपमार्गरोधकः ॥३४॥

॥ इति जिज्ञासाधिकरणम् ॥

---

रूढिर्योगाद्बलिष्ठा पदसरणिविदां ताद्विजिज्ञास्यभूतं
(ब्रह्मजिज्ञासितव्यं)
तद्ब्रह्मेत्यत्रजीवः स्फुरतिसुविशदं पूर्वपक्षः प्रसिद्धः ।
अन्नप्राणादिकोशेष्वपि भवति जगत्कर्तृताब्रह्मलक्ष्म
काऽऽस्ते जीवे प्रभिन्ने(विभिन्ने)नयरसभरितोमध्वराद्धांत
एव ॥३५॥

---

कण्टकोद्धारप्रक्रियायामाद्याऽधिकरणकण्टकः पाटित इत्युपसंहरति—नागराजरचनेति— स्पष्टोर्थः ॥३४॥

॥ इति जिज्ञासाधिकरणम् ॥

---

जन्माद्यधिकरणपूर्वपक्षसिद्धान्तसामञ्जस्यंप्रतिजानीते—रूढिरिति—पदशास्त्रविदां रूढिर्योगाद्बलीयसी । "तद्विजिज्ञासस्व"— "तद्ब्रह्मे"त्यत्रजीवः स्फुरतीति पूर्वपक्षः प्रसिद्धः । सिद्धान्तस्तु, जगत्कर्तृत्वलक्षणस्य ब्रह्मशब्दगम्यस्य श्रवणात्तस्यजीवे, अभावाद्विष्णुरेव जगत्कारणं ब्रह्मेति । प्रमाणसत्वाद्बाधकाभावेनाऽन्नमयादिष्वपि विश्वकारणत्वाऽनुवादस्सभवति । नैवंजीवे । तस्य विश्वकारणत्वाभावात् । एवं मध्वसिद्धान्त एव नयरसभरितोनात्मैकत्ववाद इति सिद्धम् ॥३५॥

प्रपञ्चोयं स्थूलोभवति हरिणा सृष्ट इति या
स्फुटोक्तिःश्रौती ते वचनमखिलं व्याकुलयति।
ततस्संस्कारैर्यन्निखिलभुवनं जीवरचितं
तुलामारोढुं किं(न)प्रभवति रवीन्द्वादिभुवनैः॥

ग्राह्यं प्रसिद्धं किल कारणत्वमिमानिजातानि यतोऽत्रवेदे।
संकोचहीनं नतदस्ति जीवे स्थूलं न विश्वं मितजीवसृष्टम्॥

उक्थ्याराजन्यनीतिश्रवणमननजाम्रेडनं बाल्यमोहा-
त्तन्न्यायाद्ब्रह्मणोस्तु श्रुतिविदितजगत्कारणत्वं निषिद्धम्।
आक्षेपोऽत्यन्ततुच्छस्तव मलिनमते मूलवृद्ध्याखिलान्तः
(वृद्धिमूलाखिलान्तः)
मुख्योयं ब्रह्मशब्दः परइति न भवेद्वादविध्योर्विरोधः॥

---

जीवे जगत्कारणत्वाऽनुवादोत्यन्तं बाधित इत्याह—प्रपञ्च इति—अयं स्थूलप्रपञ्चोहरिणासृष्ट इति, या श्रौती स्फुटोक्तिः, सा, तव वचनं निखिलमपि वितथयति। जीवरचितं भुवनं संस्कारोपादानकम्। तज्जीवरचितसांस्कारिकभुवनमीशसृष्टरवीन्द्वाद्यनेककोटिब्रह्माण्डैस्तुलामारोढुं प्रभवति किम्? तस्मात्सिद्धं जीवे निखिल जगत्कारणत्वाऽनुवादोबाधित इति ॥३६॥

स्थूलप्रपञ्चस्रष्टृत्वं जीवस्य न घटत इत्याह—ग्राह्यमिति—"यतोवे"त्यादिश्रुतिप्रसिद्धमेवकारणत्वमिहग्राह्यं। असंकुचितसकल जगज्जन्मादिकारणत्वं जीवे बाधितं। तस्मादल्पशक्तिकजीवसृष्टं न स्थूलं विश्वमितिभावः॥३७॥

उक्थ्याराजन्यनीत्या विधीयमानेनानुवाद्ये जगत्कारणत्वोपमर्द इति तुच्छचोद्यं निराह—उक्थ्येति—मीमांसाधिकरणोपन्यासाऽऽम्रेडनादि बाल्यपरिचितपाण्डित्यप्रथनमोहादेव। न तन्न्या-

अध्यारोपाऽपवादप्रमितविषयतानिष्प्रपञ्चत्वसिद्ध्यै
सार्थक्यं सृष्टिवाचामिति तव कथनं (वाचांप्रलपनमितिते)
विद्धिनिर्मूलमेव ।
वाक्यं यज्ञर्तिलाख्यं विधिविषयपयोवाक्यमथैक्यबद्धं
नैवं ब्रह्मैक्यवाक्यं जगदुदययतोवेतिवाक्यार्थरूद्धम् ॥
विद्धद्रूढिःप्रशस्ता बहुळबलवती दुर्बलारूढिरेत-
त्साधूक्तं चन्द्रिकायां पठ सकलमिदं युक्तिदृष्टान्तपूर्वम् ।
विद्धद्रूढिप्रसादप्रचुरतमबलब्रह्मशब्दो गरीयान्
कृत्स्नाऽद्वैतश्रुतीनां रभसनिरसनं कर्तुमीष्टे समग्रम् ॥

---

यसंचारेण ब्रह्मजगत्कारणत्वोपमर्दः । तव मतएव मूलवृद्ध्यादि-सर्वनाशः । अयं ब्रह्मशब्दः परममुख्य इति चंन्द्रिकोक्तदिशा विध्यनुवादयोर्विरोधाऽभावेन तात्रर्कीनकल्पनायास्तुच्छत्वेन न कथमपि ब्रह्मजगत्कारणत्वोपमर्द इति भावः ॥३८॥

सृष्टिवाक्यानां त्वद्रीत्या सार्थक्यं न संभवतीत्याह— अध्यारोपेति- जर्तिलादिवाक्यपयोविध्यैकवाक्यतावत्सृष्टिवाक्यानां त्वदभिमताऽद्वैतब्रह्मबोधकवाक्यैकवाक्यताभावान्निर्मूलात्वत्प्रक्रिये - तिभावः ॥३९॥

यौगिकएव ब्रह्मशब्दोबलीयान्नरूढ इति केयं कल्पनेतिचोद्यं निराह—विद्धद्रूढिरिति—विद्वद्रूढिबलोपेतः ब्रह्मशब्दस्सकलाऽद्वैत-श्रुतीनां सरभसनिरसनं कर्तुमीष्टे । चंद्रिकायां प्रतिपादितं सकल-मिदं पठ । अस्मत्प्रबन्धपठनतदर्थाऽवबोधनाद्यशक्तस्य तवास्म-न्मतखण्डनप्रयासः शाठ्यं, धाष्टर्यमेव प्रकटयति, न ब्रह्ममीमांसाधि-कारमिति भावः ॥४०॥

ब्रह्मतर्काऽगोचरमिति तदचिन्त्याऽद्भुतमहिम्ना जीवेशाऽभेदो-

शास्त्रेणैकेन गम्योजगदुदयगतिध्वंसहेतुर्हरेश्च:
ब्रह्माख्योनोविरोधोगुणगणनिलये लोकदृष्ट्या कुतर्कैः ।
किंतु ब्रह्मैक्यभेदश्रुतिगतविमतिध्वंसनायाऽक्षसाक्ष्यं
लब्ध्वा भेदश्रुतिस्सा खलु बहुमनुते लोकदृष्टिं च तर्कम् ॥

इति नागराजरचिते सुखयतिमतसरणिकण्टकोद्धारे ।
जन्माद्यधिकरणोदितदोषनिरासोस्तु माधवप्रीत्यै
(माधवस्यमुदे) ॥४२॥

॥ इति जन्माद्यधिकरणम् ॥

---

सदेववाक्ये बहुकर्तृतायां नाऽनन्यथासिद्धिबलादि शक्यम्।
वक्तुं न तस्मादनुमानगम्यं विश्वस्य नस्याद्बहुकर्तृकत्वम् ॥

---

स्त्विति विकत्थनं खण्डयति—शास्त्रेणेति—सत्यं लोकदृष्ट्यनुसारिशुष्कतर्का न ब्रह्माणि प्रवर्तन्ते । तथापि, भेदैक्यश्रुतिविरोधपरिहारप्रयोजनापेक्षितार्थनिर्णये तावत्प्रत्यक्षसंवादसचिवभेदश्रुतिप्राबल्यसमर्थनशक्तिशालितर्काणां वाक्यार्थनिर्णयद्वारा श्रुत्यनुग्राहकतया सकलप्रेक्षावदुपादेयत्वान्नतथाविधानां शुष्कतर्कत्वं । अक्षसाक्ष्यं लब्ध्वा, भेदश्रुतिः, लोकदृष्टिं तर्कं च बहुमनुत इति भावः । तस्मान्मध्वमते जन्माद्यधिकरणरचना पारमार्थिक विमर्शकमनोरञ्जनरामणीयकशालिनीति सिद्धम् ॥४१॥

अधिकरणार्थमुपसंहरति—इतीति—स्पष्टोर्थः ॥४२॥

॥ इति जन्माद्यधिकरणम् ॥

---

जगदनेककर्तृकं न भवतीति शास्त्रयोन्यधिकरणार्थं प्रतिजानीते—सदेवेति—अत्रवाक्ये बहुविश्वकर्तृत्वनिर्णये, अनन्यथासिद्धिबलादि वक्तुं न शक्यं । तस्माद्विश्वस्याऽनुमानगम्यं बहुकर्तृकत्वं न सिद्ध्यति ॥४३॥

नानार्थत्वं यदुक्तं श्रुतिषुबहुमतं बाधकाभावसाध्यं
किंचैवं श्रौतलिङ्गाद्यभिमतमतुलं यत्रतात्पर्यलिङ्गम् ।
तत्राऽनेकार्थतास्यात्प्रबलनयकृता तेन सर्वत्र किं सा
नूनं द्वेषैकमूलं छलसरणिकृतं दूषणं किं निरस्यम् ॥४४॥

एकत्वं सृष्टिवाक्यप्रकरणपठितं बोधयत्यत्रतत्वं
नास्त्यन्यःकोपि लोके दिवि भुवि च समोनाऽधिको-
विश्वकर्तुः ।
उच्छास्त्राऽनेककर्तृप्रथनमनुचितंसर्वमानोपरुद्धं (मानैर्विरुद्धं)
भूत्वाप्राज्ञाऽपहास्यःकुरु कलुषमते बाधितापादनानि ॥

आत्मावाइदमेकएव सदिति ब्रह्माग्र आसीदिति
श्रद्धेयःश्रुतिगोचरोभगवतोनारायणस्येशितुः (स्यस्फुटम्)।

---

श्रुतिवाक्यानामनेकार्थत्वेपि सृष्टिवाक्यं नाऽनेककर्तृपरमिति-प्रतिपादयति—नानार्थत्वमिति—यत्र च बाधकाभावः, यत्र च श्रुतिलिङ्गोपक्रमोपसंहारादितात्पर्यलिङ्गसाचिव्यं, तत्र तत्तच्छ्रुति-वाक्यानां तत्तदनेकार्थतास्यात्। सा किं सार्वत्रिकी! तावकीनं दूषणं द्वेषैकमूलकं छलोक्तं। किं तन्निरस्यं? निग्रहाऽनर्हत्वादिति भावः ॥४४॥

सृष्टिवाक्यप्रकरणपठितं तत्वमेकत्वं बोधयति । तच्चैकत्वं समाऽभ्यधिकराहित्यप्रतिपादकं। तच्चाऽनेककर्तृताबाधकं जागर्ति। तस्मादुच्छास्त्राऽनेककर्तृत्वाऽऽपादनं सकलप्रमाणविरुद्धं। प्राज्ञानाम-पहास्योभूत्वा बाधिताऽऽपादनानि कुरुष्व। तादृगापादनकारणं त्वन्मतिकालुष्यमेवेति भावः ॥४५॥

एक एव विष्णुर्जगत्कर्तेति दर्शयति—आत्मेति—विष्णु निष्ठकारणैकत्वस्यस्वाश्रयप्रतियोगिकाऽन्योन्याभावाऽसमानाधिकर-

निर्णीतोजगदेककारणगुणोनाऽन्यस्य संभावितः
स्रष्टारोबह्वोभवन्ति न कदाप्येकस्सविष्णुर्गतिः ॥४६॥

सृष्टिस्थित्यादिकार्येष्वगणितजगतामस्ति नित्योनिमित्तं
गम्यश्शास्त्रेणशक्तः परइतिविदितः कारणं श्रीनृसिंहः ।
सामग्रीभूतमूलप्रकृतिरपिजगत्सर्जने वांछितैव
श्रीशस्वातंत्र्यहानिः कथमपि न भवेन्मायिजल्पेन किं मे

द्यावाभूमीतिवाक्ये प्रचुरबलनयैरेकमेवाऽद्वितीयं
वाक्येष्वन्येष्वपीत्थं विशदमतजगत्कारणंत्वेक एव ।
नानात्वं नैवसिद्धं बहुभवनकथैकस्य दूरे निरस्ता
विष्णुस्सर्वोत्तमोयं सृजति च भुवनं पाति हन्ति-
स्वशक्त्या (स्वलीलः) ॥४८॥

---

ण्यरूपतया, तादृशमेकत्वं बहुकर्तृकतां निपुणतमं निरुणद्धि । तस्मादेकस्यैवकर्तुर्बहुभवनशङ्काऽनवकाशः । शङ्काऽभावेबहुभवनप्रयुक्तभेदप्रसक्तिरेवनोदेति । तस्मात्तादृशप्रसक्तिनिवारणेन कर्त्रैक्यश्रुतेरर्थवत्तास्यादिति विकत्थनमुन्मत्तप्रलपनमिति सिद्धम् ॥४६॥

अनेके जगत्कर्तारस्संघीभूय लीलया विश्वं सृजन्तीत्यस्त्विततितुच्छचोद्यं निराह—सृष्टीति—कर्त्रैक्यश्रुतिबलादनेककोटिब्रह्माण्डसृष्टिस्थितिसंहारलीलाविनोदः श्रीनृसिंहएव "परास्यशक्ति"रिति विदितः । जगत्सृष्टौ प्रकृत्यादिसामग्री वाञ्छितैव । एवमपीश्वरस्वातंत्र्यहानिर्नेति जगदनेककर्तृकं न भवतीति सिद्धम् ॥४७॥

प्रकारान्तरेण विशदयति—द्यावाभूमीति—अनेककर्तृकत्वे तेषां द्वेषेर्ष्यादिना सृष्टिव्यापारोपरोधप्रसङ्गः । न च मुक्तानामिव तेषां द्वेषाद्यभावः । वैषम्यात् । सिद्धंसुगमम् ॥४८॥

युक्ता नोत्वद्व्यवस्था निगदितमखिलं पूर्वमेवेश्वराणां
नानात्वं नास्त्युपासाविषयपरतया योजनस्यावकाशः ।
नानार्थं स्यादुपास्तिप्रकटनवचनं वस्तुवाक्यं तु नस्या-
त्तस्मात्कत्रैक्यवाक्ये कथमपि न भवेत्पूर्वसिद्धानुवादः
(त्सिद्धतत्वाऽनुवाद)ः ॥४९॥

वेदे नो(जैन)सप्तभङ्गीसरणिचरणवानस्तिनास्त्यादिजल्पन्
भूमा ब्रह्मैव विष्णुर्निरतिशयतया नैकदेशं वदन्तौ ।
शब्दौ पूर्णत्वबोधावधिकृतिविधया पूर्णतैव प्रसिद्धा
सर्वैपूर्णास्तटाका इति वदभिहिता भूमशब्दस्सदर्थः ॥५०॥

सन्त्येव श्रुतयश्चतुर्मुखमुमाकान्तं भवं कारणं
विश्वस्येति वदन्ति ताःकथमसौ विष्णुः परं कारणं ।
सर्वासां कमलापतौ किल महातात्पर्यसिद्धिःस्थिता
तस्माच्छर्वचतुर्मुखादिकपदान्यन्यार्थगामीनि भोः ॥५१॥

---

उपासनावाक्यस्य नानाऽर्थप्रतिपादकत्वं युक्तं, न वस्तुपर-वाक्यस्येत्याह—युक्तेति—स्पष्टोर्थः ॥४९॥

भूमब्रह्मशब्दार्थः परेण नाऽवबुद्धोहन्त !!! । तदनवबोधमूल-कर्त्रैक्यश्रुत्यसदर्थबोधकत्वापादनं तेन कृतं परमतुच्छतया निग्रहा-नर्हं । वस्तुतस्साश्रुतिस्सदर्थबोधिकेति प्रतिपादयति—वेद इति— ॥

ब्रह्मरुद्रयोरपि जगत्कर्तृत्वावेदकप्रमाणसद्भावान्नविष्णुरेक एव जगत्कारणमिति चोद्यं निराह—सन्तीति—प्रमाणबलेनाऽन्यदेवता बोधकपदानां विष्णावेव समन्वय इति विष्णुरेक एव जगत्कर्तेति सिद्धम् ॥५१॥

आनन्दतीर्थमतमार्गगकण्टकौघ-
शीघ्रोद्धृतौ कलय नागकृतौ तृतीयाम् ।
सच्छास्त्रसूत्र(योनि)सरणीगतकण्टकीन(कस्य)
दूरोद्धृतिं सकलसज्जनसौख्यशीलाम् ॥५२॥

॥ इति शास्त्रयोनित्वाधिकरणम् ॥

---

एवं सम्यग्विचारप्रचुरबलमहोपक्रमाद्यन्वयेन
प्रेष्ठो विष्णुस्स एको भवति बहुजगत्कर्तृतालक्षणाढ्यः ।
विद्धि त्वं कर्मकाण्डप्रथितपदपरो विष्णुरेवाऽत्र भूमा
तस्माच्छर्वादिकानां कथमपि न भवेद्विश्वकर्तृत्वलक्ष्म ॥
निन्दान्यायावतारो नहि विविधपुराणागमार्थावधृत्यै
प्राबल्यं दुर्बलत्वं मतिमदभिमतं तत्वशुद्ध्यै विचार्यम् ।
एवं शैवागमानां स्फुरति बहुविधं दुर्बलत्वं विचारे
तस्माच्छास्त्रान्वयस्संभवति नरहरौ वागधीशे न भर्गे ॥

---

अधिकरणार्थमुपसंहरति—आनन्दतीर्थेति । स्पष्टोर्थः ॥५२॥

॥ इति शास्त्रयोनित्वाऽधिकरणम् ॥

---

समन्वयाधिकरणार्थं प्रतिजानीते—एवमिति । उपक्रमादि-बलेन कर्मकाण्डगतपदानां कारणवाक्यानां विष्णावेवसमन्वयो न शिवादिष्विति सिद्धम् । स्पष्टमन्यत् ॥५३॥

नहिनिन्दान्यायेन शैववैष्णवपुराणेषु बलाऽबलचिन्ताऽव-काशोनेतिचोद्यं निराचष्टे—निन्देति । विरोधसत्वान्नाऽत्र तन्न्यायाव-तारः । तस्मात्कर्तव्यैव पुराणेषु बलाऽबलचिन्ता । बलाऽबलविचारे विष्णावेव सकलकारणवाक्यानां समन्वय इति सिद्धम् । शिष्टं सुगमम् ॥५४॥

नागराजेनरचितेमुक्तिमार्गसुखावहे ।
मध्वाध्वकण्टकोद्धारेपाटितस्तुर्यकण्टकः ॥५५॥

॥ इति समन्वयाधिकरणम् ॥

---

वाच्यत्वं सर्वशब्दैर्भवति भगवति श्रीनिवासे परस्मिन्
ब्रह्मैवं बिम्बभूतं प्रतिफलितमुपास्यं सुधीध्यानगम्यम् ।
वाच्योपास्ये विभिन्ने गुणगणकथनं श्रौतवाक्येषु युक्तं
सिद्ध्यत्येवं प्रमाणप्रमितनयबलादीक्षतेर्ब्रह्मवाच्यम् ॥

ध्याने यद्ब्रह्मबिम्बप्रतिफलनमहो वासनामात्ररूपं
तस्मिन्नुत्पत्तिनाशान्नहि भवति जगत्कारणत्वादियोगः।
बिम्बोपास्यव्यवस्था सुखमुनिसमये शोभते न त्वदीये
सिद्धं ब्रह्मैव वाच्यं सकलपदचयैर्नैगमैस्सद्गुणाढ्यम् ॥

---

अधिकरणार्थमुपसंहरति–नागराजेनेति–स्पष्टोर्थः ॥५५॥

॥ इति समन्वयाऽधिकरणम् ॥

---

अनुपास्यं ब्रह्म बिम्बभूतमतएव न वाच्यमपीति तुच्छविकत्थनं खण्डयन्नीक्षत्यधिकरणार्थं प्रतिजानीते–वाच्यत्वमिति । सकलशब्दवाच्यं ब्रह्मैव श्रीनिवासः । स च बिम्बभूतः । प्रतिबिम्बएवोपास्यः । वाच्योपास्ये विभिन्ने । वाच्योपास्यौविभिन्नावित्यपिसाधु । एवमपि बिम्बस्यब्रह्मणः श्रीनिवासस्य सर्वशब्दवाच्यत्वाऽनपाय इति सिद्धम् ॥५६॥

परोद्भावितचोद्यमखिलमपि तात्विकप्रक्रियाऽनभिज्ञतामूलकमेवेत्याह—ध्यानइति । बिम्बोपास्यव्यवस्था मध्वमत एव शोभत इत्यनुपास्यं कथं वाच्यमिति क्षुद्राक्षेपोनिरस्तः ॥५७॥

सौख्यतीर्थमतकण्टकोद्धृतौ
नागराजरचना विभाव्यताम् ।
पाटितस्सुलभमेषकण्टकः
पंचमः परममार्गरोधकः ॥५८॥

॥ इतीक्षत्यधिकरणम् ॥

---

पूर्णप्रज्ञीय(ज्ञार्य)पंचाधिकरणरचना सर्वसन्न्यायशीला
तद्रीत्याऽशेषनाम्नां भवति नरहरावन्वयः प्राज्ञरूढ्या ।
तद्रीत्यैवाऽविरोधोबहुसमयगतस्साधनं शुद्धभक्तिः
मुक्तिःपूर्णं फलं तत्सकलमविकलं मध्वराद्धान्त एव ॥५९॥

योगिश्रीविजयीन्द्रार्यैर्मध्वशास्त्रपराक्रमः ।
सम्यक्प्रकाशितोमायिमताऽक्रमनिरासकः ॥६०॥

---

अधिकरणार्थमुपसंहरति–सौख्यतीर्थेति । स्पष्टोर्थः ॥५८॥

॥ इतीक्षत्यधिकरणम् ॥

---

पश्चाधिकरणीदूषणेनाऽन्याधिकरणदूषणमपिसाधितमितिपर-कीयदुरभिमानं खण्डयति–पूर्णप्रज्ञेति । पूर्णप्रज्ञरचितपश्चाधिकरणी न्यायशीला । समन्वयः सुस्थः । अविरोधः प्रतिमानपराहतिशून्यः । साधनं शुद्धभक्तिः । मुक्तिश्च फलम् । तस्मादविकलोमध्वराद्धान्तः ॥

परोक्ताऽन्याधिकरणदूषणखण्डनं श्रीविजयीन्द्रतीर्थैः कृत-मित्याह–योगीति । दूषणप्रकारश्चश्रीविजयीन्द्रतीर्थकृत "मध्वाध्व-कण्टकोद्धारे" द्रष्टव्यः ॥६०॥

अस्माभिर्यद्विचार्यं निखिलनिगमवाक्शुद्धतात्पर्यभूतं
कल्याणाऽनेकराजद्गुणगणभरितं ब्रह्म नारायणाख्यम् ।
त्वच्छास्त्रे तद्विचार्यं न भवति नहिवा तावकीनैक्यवादः
तस्मादापादनं ते बुधकृतपरिहासास्पदोन्मत्तवाक्यम् ॥

गौडादिपादवरशङ्करमायिवर्य-
चोरापहारसमनन्तरगूहनाद्यैः ।
नष्टं रमारमणसर्वपरत्वरत्नं
प्रत्यानियाय निजभक्तसुखाय(निजशक्तिबलेन) मध्वः ॥

---

अद्वैत्यभिमतब्रह्मैव मध्वाभिमतमिति तुच्छापादनं खण्डयति—**अस्माभिरिति**। अस्मद्विचार्यं, निखिलनिगमवेद्यम् , सकलकल्याणगुणपरिपूर्णं नारायणाख्यं ब्रह्म, त्वच्छास्त्रे विचार्यं सर्वथा न भवति। तावकीनात्मैक्यवादोपि न। तस्मात्तावकीनाऽऽपादनमुन्मत्तप्रलपनमिति सिद्धम्। शास्त्रीयविवादभीरुणैवेवमापादनं शक्यं कर्तुम्। किंचापादनमेवंविधं परस्य विचाराऽसामर्थ्यम् , भीरुताम् , विश्वतः प्रसृमरमूढताम्, कथकसंप्रदायाऽनभिज्ञतां च, स्फुटीकरोतीति विभावनीयम् ॥६१॥

विष्णुपरतत्वरत्नं मायिचोराऽपहृतं मध्वःप्रत्याऽऽनिनायेत्याह—**गौडादीति**। गौडपादशङ्करादिचोरापहारानुपदरहस्यस्थलस्थापनादिनष्टं, लक्ष्मीपतिसर्वोत्तमत्वरत्नम् , निजभक्तसुखायाऽथवा निज शक्तिबलेन मध्वः प्रतिलेभे। यद्यपि सामान्यचोरशिक्षणं अस्माकमथवा राजकीयरक्षकाणां सुशकम्। तथापि परब्रह्मसकलकल्याणगुणसत्तादिलोकविलक्षणचोराणां शिक्षणं श्रीमन्मध्वस्यैव सुसाधम् , नाऽन्यस्येति भावः ॥६२॥

सेव्यतां महितमध्वदर्शनं
त्यज्यतां शिथिलबौद्धदर्शनम् ।
शाङ्करं तदपि नैव शङ्करं
साक्ष्युमाधवगनीरमाधवः ॥६३॥

विष्णुपरतत्वमौक्तिकलुण्टाकानां पराहत्यै ।
एकैकं पद्यमिह ब्रह्मास्त्रं मध्ववाक्स्रष्टम् ॥६४॥

श्रीकुंभघोणनगरीरुचिताधिवास-
द्वैताध्वनीनवरभारतसिंहकीर्तिः ।
श्रीरामचन्द्र इति सर्वजनैकमान्यः
नागोस्तितस्य तनयो विजयीन्द्रदासः ॥६५॥

---

श्रीमन्मध्वमतस्यैव सकलप्रेक्षावदुपादेयत्वे साक्षी साक्षाद्भगवान् गीताचार्यः श्रीकृष्णइत्याह–सेव्यतामिति । महितं मध्वदर्शनं सेव्यताम् । शिथिलम्, प्रमाणविधुरं न्यायाऽपेतं बौद्धदर्शनं त्यज्यताम् । शाङ्करं नाममात्रेण । वस्तुतोनैव शङ्करम्, न पारमार्थिकसकलपुरुषार्थमूर्धाभिषिक्तमोक्षसुखप्रदम् । अस्मिन्नर्थे पार्वतीपति सेव्योरमापतिरेवसाक्षी । "द्वाविमौपुरुषा" वित्यादिसाक्ष्युपन्यासस्तत्रतत्र स्पष्ट एव ॥६३॥

पद्यप्रबन्धस्याऽस्यपरविजयसाधकत्वं प्रतिपादयति–विष्णुपरतत्वेति । विष्णुसर्वोत्तमत्वमौक्तिकचोराणां पराहत्यै, मध्ववाक्समुद्भूतमेकैकमपि पद्यं ब्रह्मास्त्रमिति भावः । ननु चोरनिराकरणविद्रावणाद्यर्थं ब्रह्मास्त्राऽऽवश्यकता केतिचेन्नैवम् । पूर्वोक्तरीत्या सकललोकविलक्षणप्रबलचोराणां निग्रहाय, प्रबलमेवब्रह्मास्त्रमपेक्षितमिति भावः ॥६४॥

ग्रन्थकर्तृनाम निर्दिशति–श्रीकुंभघोणेति ॥६५॥

चक्रे सकविवरेष्टं सुखयतिमतसरणिकण्टकोद्धारम् ।
प्रीणातु तेन सततं पुरारिसेव्यो मुरारातिः ॥६६॥

नानाशास्त्राब्धिनौचारिनागराजप्रसाधितः ।
प्राचीनकण्टकोद्धारः पद्मापतिपदार्पितः ॥६७॥

॥ श्रीविजयीन्द्रान्तर्गतश्रीनृसिंहार्पणमस्तु ॥

---

पद्यप्रकरणेनाऽनेनभगवत्प्रीतिमाशास्ते—चक्र इति । साधितेन मध्वाध्वकण्टकोद्धारेण, सततम्, पुरारिसेव्योमुरारातिः प्रीणातु । विष्णोस्सदा शिवसेव्यत्वे "श्रीरामरामरामेति रमेरामेमनोरमे" इत्यादिगणनातीतप्रमाणान्यनुसन्धेयानि ॥६६॥

प्रबन्धं परमात्मने समर्पयति—नानेति । प्राचीनकण्टकः दीक्षितः । प्रबन्धोयं लक्ष्मीरमणचरणसमर्पितो विभातीति सर्वं समञ्जसम् ॥६७॥

॥ श्रीविजयीन्द्रान्तर्गतश्रीलक्ष्मीनृसिंहार्पणमस्तु ॥



॥ श्रीः ॥

॥ श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः ॥

# ॥ नवीनकण्टकोद्धारः ॥

श्रीनिवासमरविन्दवासिनीं
पूर्णबोधमभिवन्द्य भारतीम् ।
उद्धरामि सुखतीर्थदर्शन-
प्रेष्ठमार्गगनवीनकण्टकम् ॥१॥

केमे श्रीमज्जयीन्द्राः जगति बहुमतास्सर्वतंत्रस्वतंत्राः
काऽसौ वेदान्तवक्ता मितमितधिषणश्शास्त्रिनारायणा-
ख्यः ।
चित्रं श्रीमज्जयीन्द्रप्रचुरनयबलप्रौढवाक्यार्थतत्व-
ज्ञानाऽशक्तः कथं स्यात्प्रभुरतिजडधीस्तद्वचः खण्डना-
याम् ॥२॥

अध्यास्ते पाठशालामिति भवतु महीशूरसाम्राज्यपुष्टाम्
अस्मिन्काले विचित्रं कलिकलितमलेप्येषधार्ष्ट्येन मोहात्।
पौरोभाग्याद्दुरन्तात्सुखयतिसमयद्वेषसंतापवेगा-
दुद्युङ्क्ते खण्डनाय व्रतिवरविजयिप्रौढवेदान्तवाचाम् ॥३॥

विजयीन्द्रतीर्थदिनकरमपि शास्त्री शक्नुयात्पतङ्गोऽल्पः ।
विष्णुपदाश्रयमहितं बुधगुरुसेव्यं पिधातुमपहास्यः ॥४॥

यद्यपि शास्त्रिप्रलपनमखिलमिदानीं तु निग्रहाऽनर्हम् ।
निरसनमिषेण तन्मतिमालिन्यं श्रावये विबुधसदसि ॥५॥

वन्ध्याकन्यावरान्वेषी शास्त्रिनारायणाह्वयः ।
शक्तश्चेद्विजयीन्द्रोक्तिखण्डने कलिना जितम् ॥६॥

नादिरायणपदेन शास्त्रिणा श्रीजयीन्द्रमुनिदूषणं कृतम् ।
सर्वनिग्रहपदैकभाजनं नागराजकृतिनात्र खण्ड्यते ॥७॥

परोक्ते दूष्य एवांश आद्यन्ताभ्यामनूद्यते ।
खण्ड्यते विर्यान्द्रार्यवाङ्मयन्यायसायकैः ॥८॥

नारायणीयकुमतीरणदोषजात-
निष्कंपखण्डनसमर्थितखण्डखाद्यम् ।
आस्वाद्य नागकलितं च सुधारसाढ्यं
मायामतस्यविजये विबुधा यतन्ताम् ॥९॥



परमकारुणिकेन भगवता बादरायणेनाध्यात्मिकाऽऽधिभौतिकाऽऽधिदैविकदुःखपरंपराकल्लोलमालाक्षुभितसंसारसागरनिमज्जनोन्मज्जन-परिश्रमाऽऽकुलितसात्विकमुक्तियोग्याधिकारिजनोत्तारणायाऽकारि-साङ्गब्रह्मविद्याप्रतिपादकचतुर्लक्षणी। चतुर्लक्षण्यां जिज्ञासाविषयत्वेन श्रुत्यैकसमधिगम्यं परं ब्रह्म श्रीनिवास एव प्रतिपादितः । मुमुक्षुश्चाधिकारी । मोक्षः प्रयोजनम् । एवमनुबन्धचतुष्टयतत्तदनुगुणसंबन्धसनाथम्, ब्रह्ममीमांसाशास्त्रमन्यैर्भाष्यकारैरन्यथाव्याख्यातमित्यन्यथाव्याख्यानदर्शनकलुषितशेमुषीणां मुक्तियोग्यानामधिकारिणां यथार्थज्ञानप्रतिपत्तये मध्वाऽपरनामधेयपूर्णप्रज्ञभगवत्पादाः, बादरायणीयपारमार्थिकाभिप्रायाविष्करणनिपुणं निजं भाष्यमारचयामासुः । तदेवाऽऽनन्दतीर्थीयं भाष्यं प्रामाणिकमिति-तत्वप्रकाशिकान्यायसुधादिटीकारचनचतुरैर्जयतीर्थगुरुपादैस्तथा तात्पर्यचन्द्रिकाकृद्भिर्व्यासतीर्थश्रीमच्चरणैर्निपुणतमं व्यवस्थापितम् ।

श्रीमन्मध्वभाष्यपञ्चाधिकरणी निरर्गलजीव-ब्रह्मभेदविद्याविद्वेषकालानलज्वालादग्धाऽन्तःकरणेनाऽप्पय्यदीक्षितेन तदीय "मध्वतंत्रमुखमर्दन" - "मध्वमतविध्वंसना"ख्यश्लोकवाक्यग्रन्थयोः खण्डि-

तेव। दीक्षितसमकालीनैस्सर्वतंत्रस्वतंत्रैर्द्वैतसाम्राज्यपरिपालनपरवादिपराजयादिलोकोत्तरचरित्रालङ्कर्मीणैर्विजयीन्द्रयोगीन्द्रैर्व्यरचि 'मध्वतंत्रमुखभूषण - मध्वाध्वकण्टकोद्धारा'ख्यं वादग्रन्थरत्नं यस्मिन्न्यायवैशेषिकसिद्धान्तिवनिग्रहस्थानप्रदर्शनपूर्वकं निरवशेषं खण्डितमप्पय्यदीक्षितीयं प्रकरणम्। व्यवातिष्ठिपंश्चविजयीन्द्रास्तत्र मध्वभाष्यस्यैवसकलप्रामाण्यसाचिव्यं प्रेक्षावदुपादेयत्वंच॥

संप्रति महीशूरवास्तव्यः कश्चिच्छास्त्रिनारायणः श्रीविजयीन्द्रप्रबन्धवाक्यार्थविबोधादिप्रामाणिकसमानाधिकरणेतिकर्तव्यतासामर्थ्यविधुरोपि मध्वशास्त्रविद्वेषमधुपानोन्मत्तः श्रीविजयीन्द्रग्रन्थं पंक्तिशस्तत्रतत्राऽनूद्य, तन्मतिमात्रमनोरमाणि, प्रमाणबाधितानि, क्षुद्राणि, दूषणानि, असंबद्धप्रलापस्यपरांकोटिमापन्नानि, प्रत्यपीपदद्दीक्षितप्रकरणटिप्पण्याम्। तान्यत्रदूषणानि निरस्यन्ते॥

(१) तत्र तावच्छास्त्रिकृतं मङ्गळाचरणमप्यत्यन्तमुपहासास्पदं तथाहि—हरिरन्यः। हरोभिन्नः। शास्त्रिगुरुरपिकश्चिदन्यः। तस्माद्धरिहराऽभिन्नगुरुरेव बन्ध्यासुतसत्तासमानसत्ताक इति साध्वनुष्ठितं मङ्गळाचरणम्। स्यादेतत्। यदुक्त "भविद्ये"त्यादि "यावदित्यन्तं—तत्तुच्छम्। अविद्यानिवर्तक-निवर्तनादिनिरपेक्षप्रत्यगात्मरूपस्येदानीमपिसत्तारूपेणाऽवस्थिते "भवत्वि"ति लोट्प्रयोगानुपपत्तेः। यदप्युक्त "मनवरते"त्यादि "चिन्त्यमानोपी"त्यन्तं—तत्तुच्छम्। अत्रो"द्धाव्यगृह्यमाण" इति टीकायां टिप्पण्यां च योगशास्त्ररहस्यार्थाऽनभिज्ञतामेव स्फुटयति। हृदयकमलकोशोद्धाटनादिकानां ध्यानानन्तरसाध्यत्वात्। न च क्लृप्तपूर्वाऽपरीकारः पूर्वापरभावोवा शक्योन्यथयितुम्। ध्यानस्य पूर्वकालसंस्पर्शित्वात्। हृदयकमलकोशोद्धाटनादीनामुत्तरकालावच्छिन्नत्वात्॥

(२) यदुक्तं शास्त्रिणा "तदेवे" त्यादि "प्रामाणिकाभिप्रेत" इत्यन्तं–तत्तुच्छम्। ब्रह्मणोनिर्विशेषत्वे, प्रत्यगभिन्नत्वे, तस्य सौत-

पदप्रतिपाद्यत्वानुपपत्तेः । पदप्रतिपाद्यत्वाभिधयत्किंचिद्योग्यतावच्छेदकावच्छिन्नस्य सविशेषत्वात् । प्रत्यगभिन्नत्वे जिज्ञास्यत्वाऽयोगात् । जगज्जन्मादिकारणत्वाऽयोगात् । तद्विशेषं प्रति विप्रतिपत्तेरितित्वदीय भाष्ये विशेष परामर्शात् । निर्विशेषं ब्रह्म सूत्रप्रतिपाद्यमित्यस्याऽत्यन्तविरुद्धत्वात् । सूत्राणां वेदान्तवाक्यविचाररूपतया वेदान्तवाक्येषु विचारविषयेषु ब्रह्मपददर्शनात्तदेवोपयुक्तं सूत्रकृतेति न तेन ब्रह्मनिर्विशेषमिति सिद्ध्येत् । तच्चब्रह्म शिवोवा विष्णुर्वेति भवत्येवसंशयः । विष्णुरेवेति मध्वराद्धान्त एवप्रामाणिक इति वस्तुतत्त्वम् ॥

(३) यदुक्तं "लोक" इत्यादि "परास्तमि"त्यन्तं—तत्तुच्छं । चेतनाऽचेतन विलक्षणवस्तु सिद्धिरित्थमित्यवेहि । चेतनः देवदत्त-यज्ञदत्त-रासभ-शाखि-प्रभृतयः । अचेतनः घट-पट-स्तंभ-कुड्यकुसूलादिः । तदुभयमबाधिताऽक्षमानसिद्धम् । तदुभयविलक्षणं ब्रह्म श्रुत्यैकसमधिगम्यम् । तदुभयविलक्षणत्वं च तदुभयनियामकत्वम् । निर्विशेषचिन्मात्रे सूत्रयोजनस्य तीर्थकरकोटिभिरपिसमर्थयितुमशक्यत्वात् । त्वन्मते सविशेषनिर्विशेषयोश्चिन्मात्राऽभेदावरुद्धत्वेन, सविशेषवाक्यानां निर्विशेष इव निर्विशेषप्रतिपादकत्वाग्रहाभिमानविषयवाक्यानामपि सविशेषे योजनाया अनिवार्यत्वात् । निर्विशेषविषयतया पराभिमता सौत्री योजनानास्माभिरङ्गीकृता । प्रत्यक्षादिविरोधादितिवाक्येप्रत्यक्षस्यसगुणब्रह्मसाधकप्रमाणतयाऽनुपन्यासाच्छास्त्रिकृतं दूषणं श्रीविजयीन्द्रपादोक्तिवास्तविकाऽर्थाऽनवबोधमूलकमुन्मत्तप्रलपनमितिस्पष्टम् । किंच बादरायणसूत्राणां सविशेष-निर्विशेषाख्यसंभावितयोजनाद्वयविषयाणां पारमार्थिकतात्पर्यनिर्णयद्वाराऽन्यतरयोजनाया अप्रामाणिकत्वनिश्चयमन्तरा तत्वनिर्णयाभावाद्विचारविवादपर्यवसानाभावात्तादृशान्यतराऽप्रामाणिकत्वव्यवस्थापनस्य, कथकसंप्रदायमवलम्ब्यकर्तव्यतया विवादाधिकरणं ताव-

त्सर्वतंत्रसिद्धान्तभावोपोद्बलितमेवग्राह्यम् । तथा च, पराभिमतनिर्विशेषयोजनाया अस्माभिरनङ्गीकारादस्मदभिमतसविशेषयोजनाया अद्वैतिभीरोदनादिना कथमप्यङ्गीकारात्सगुणमेव ब्रह्म सर्वतंत्रसिद्धान्ततयाभ्युपेयमिति श्रीविजयीन्द्रपादोक्त्यभिप्राय इति दिक् । एवमेकादशपंक्तिपरिमितशास्त्रिदूषणानि एकादशाधिकाऽसंबद्धप्रलपनानीति कोहि नाम विमर्शकोनपश्येत् । स्यादेतत् ॥

(४) यदुक्तं "एतेने"त्यादि "प्रादुःष्युरि"त्यन्तम्—तत्तुच्छम् । एकविंशतिकुभाष्यदूषण - स्वभाष्यैकप्रामाणिकत्वव्यवस्थापनपरमतखण्डनोद्दामप्रसृमराऽवनिमण्डलदिगन्तविश्रान्तकीर्तिप्रभाभास्वत्पूर्णप्रमतिसूर्यस्तावदाखण्डल - त्रिपुरान्तकाद्यमरार्चितचरणः कथमिवाऽप्रसिद्धश्रुत्युदाहरणाख्यपरोद्भावितदोषवारिवाहच्छन्नोभवेत् ? श्रुतयोऽप्रसिद्धाश्चेत्कस्य नामाऽप्रसिद्धाः ? पूर्वाचार्यवर्गस्येतिचेन्नैषदोषस्तादृशश्रुतीनामानन्दतीर्थभगवत्पादानां वा । नैषदोषः स्थाणोरेनमन्धो न पश्यतीति । अपश्यन्निजकपालस्थाणुस्फोटभाजनं भवतीति । पूर्वाचार्योदाहृतप्रसिद्धसर्वश्रुतिषु स्पष्टतमं स्वकीयराद्धान्तवर्णनं जागर्तीतिपूर्वाचार्याऽज्ञातश्रुतिप्रमाणोपन्यासो न दूषणमपितु भूषणम् । सर्वत्रलोक इतराऽसाध्यसाधनेतराऽज्ञातज्ञानेतराऽप्रकाशितप्रकाशनादिकं खलु पामरविलक्षणमहापुरुषत्वप्रमापकमितिनाऽप्रसिद्धश्रुतिस्मृत्युदाहरणं दोषाय । किंच प्रसिद्ध्यप्रसिद्धिपूर्वोत्तरावधिनिर्णयादि केन शक्यते व्यवस्थापयितुम् ? त्वदीयभाष्यकारेण दशोपनिषद्भाष्यरचनायामेवव्यापृतम् । उपनिषदामष्टोत्तरशतमधुनामुद्रितं जागर्ति । अन्योपनिषदामव्याख्यानेन त्वदीयभाष्यकारेण ता नैवविदिता इत्यापादनस्य कोनिवारयिता स्यादेतत् ॥

श्रीलक्ष्मणदेशिकेन्द्रैस्तुनाऽकार्युपनिषद्भाष्यं किमपि । भाष्याकरणादुपनिषदस्तदप्रसिद्धा इत्यनुन्मत्तः कोहिनामाऽऽपादयेत् ?

अत्रेदं विमर्शनीयम् । श्रीविद्यारण्यप्रभृतिभिरद्वैतविद्याचार्यैः

किमित्यप्रसिद्धश्रुत्युदाहरणदोषो मध्वोपरि नाऽऽरोपितः? सकलप्रसिद्धवेदव्याख्यानव्यसनिना तेन विद्यारण्येनापठितं वा मध्वभाष्यादिकम्? अनन्ता वै वेदा इति प्रमाणबलेन मध्वोदाहृतश्रुतयोपि पारमार्थिका एव स्युरिति विद्यारण्यादिभिरेतादृशक्षुद्रदोषोद्भावने न व्यापृतमिति मुक्तकण्ठं वदामः ॥

प्राक्तननानाविधदुष्कर्माचरणसमार्जितदृढवासनोपादानक-भेदविद्या - मध्वशास्त्र - विष्णुसर्वोत्तमत्वादिविद्वेषकालानलज्वालावलेहनसमाकुलितान्तःकरणेनाप्पय्यदीक्षितेनैव समानाधिकरणशास्त्रीयदोषनिग्रहस्थानादिप्रदर्शनसामर्थ्यविधुरेणैतादृशदोषोद्भावनमिति घण्टाघोषायितम् ॥

अत्रायं निष्कर्षः । प्रसिद्धश्रुतिषु सर्वास्वपि स्वकीयं द्वैतमेव प्रतिपादितमिति क्वचित्क्वचिदपूर्वताख्यतात्पर्यलिङ्गसनाथिताऽप्रसिद्ध श्रुत्युदाहरणं पूर्णप्रज्ञैः कृतमिति सर्वैः प्रामाणिकैरभ्युपगन्तव्यम् । अन्यथा दशोपनिषदतिरिक्तोपनिषदामप्रसिद्धानामप्रामाण्यापत्तेः । न च मुद्रितत्वमात्रेण प्रामाण्यम्! मुद्रितत्वेपि कल्पितत्वापत्तेः । अन्धनीयमानान्धगताऽनुगतिकप्रतिपन्नप्रसिद्धेरपिकाल्पनिकत्वापादननिरासाऽसमर्थत्वात् । किंच मध्वोदाहृतश्रुतिप्रामाण्याऽनभ्युपगमे "अनन्तावैवेदा" इत्यस्याऽप्रामाण्यापत्तेः । स्यादेतत् ॥

तस्मादेक एवात्र प्रामाणिकः पन्थाः । वादप्रतिवादप्रक्रियया स्वस्वसिद्धान्तस्थापनपरपक्षप्रतिक्षेपादिषु प्रतिपादनीयेषु परोदाहृतश्रुतिस्मृतीनामन्यार्थतैव साधनीया । नैव तेषामप्रसिद्धत्वकल्पना । तस्मान्निश्चीयते त्वदीयदीक्षितः कथकसंप्रदायाऽनभिज्ञः, विचारकौशलविधुरः, पारमार्थिकशास्त्रप्रतिपन्नदूषणनिग्रहस्थानादिप्रदर्शनशक्तिशून्यः, केवलं मध्व - मध्वशास्त्रद्वेषमधुपानोन्मत्त एव पूर्णप्रज्ञोदाहृतश्रुतिस्मृतीनामप्रसिद्धत्वदोषमापादयामासेति निश्चीयते । विद्यारण्याद्यद्वैतविद्याचार्यबुद्ध्यऽनारूढोयमप्रसिद्धश्रुत्युदाहरणदोषो यदि

दीक्षितबुद्ध्यारूढः, तदा शङ्करादिबुद्ध्यनारूढाः श्रुतयः मध्वमत्यारूढाः इति दिक् ॥

(५) यदप्युक्त "मेतेने"त्यादि "वदन् परास्त" इत्यन्तम्—तत्तुच्छम् । आपस्तम्बाद्युदाहृताऽप्रसिद्धश्रुतिप्रामाण्याभ्युपगमे मध्वोदाहृततादृशश्रुतिप्रामाण्याभ्युपगमस्याऽवर्जनीयत्वात् । यदि मन्यसे आप्त आपस्तम्बो न मध्व इति चेत्सत्यं द्वेष कलुष एवैवं ब्रूयान्नतात्त्विकविमर्शकः। किंचेदं तत्वान्तरम्। प्रसिद्धश्रुतीनामतत्वावेदकत्वप्रतिपादनापेक्षयाऽप्रसिद्धानामपि तत्वावेदकानां श्रुतीनां प्रमाणतयोपन्यासस्य नितरामभ्यर्हितत्वात्। अद्वैतप्राशस्त्यं न पौराणिकमपितु श्रुतिमूलकमिति चेन्नूनमुन्मत्तोस्याऽऽहोस्विद्भ्रान्तोसि। त्वदीयमखिवर्येणैव "साक्ष्युमाधव" इत्यस्य व्याख्याने गौरीपतिश्शङ्कराचार्यरूपेणाऽद्वैतं व्यवस्थापितवानित्यर्थे "चतुर्भि"रित्यादि पौराणिकस्यैव वचनस्य प्रमाणतयोपन्यस्तत्वात् न तत्र कापि श्रुतिः प्रसिद्धाऽप्रसिद्धा वा प्रमाणीकृतेति दिक्। तस्मादास्तां तावदाभिमानिकं तवाऽद्वैतप्राशस्त्यं—तस्य श्रुतिमूलकत्वमसंभावितम्। किंचाऽद्वैतप्राशस्त्यतच्छ्रुतिमूलकत्वोद्घोषणविकत्थनसहकृताऽकाण्डताण्डवशील - हरिहर - नटराजादि - चिन्मात्रैक्यापन्नवस्तु - शास्त्री पर्यनुयोज्यः—तत्प्राशस्त्यं किं प्रसिद्धश्रुतिमूलकमाहोस्विदप्रसिद्धश्रुतिमूलकम्? नाद्यः। अर्थविप्रतिपत्तेः। न द्वितीयः। मध्वकोट्यन्तःपातित्वात्। स्यादेतत् ॥

अथ कस्य श्रुतिप्रसिद्धिर्यदभावादप्रसिद्धश्रुत्युदाहरणं दोषाय? पूर्वाचार्याणामिति चेद्दत्तोत्तरत्वात्। किं चेदं तत्वान्तरम्। व्याससूत्रं पूर्वाचार्यैः कलुषितमिति मुक्तकण्ठं रुदन् श्रीकण्ठस्त्वदीय एव। तद्भाष्यव्याख्यानकर्ताच तावकीन एव मखिवर्यः। एवं स्थिते कलुषितधिषणैः पूर्वाचार्यैस्त्वदीयैर्मध्वोदाहृतश्रुतयो न दृष्टाश्चेत्कस्तत्र प्रतिभूः? तत्काලुष्यस्यैवतददर्शनेहेतुत्वादिति पश्य ॥

यदि मन्यसे परं वैयात्येन तव वा मखिवर्यस्य वाऽप्रसिद्धा इति नूनमपार एव पारावारो न हनूमतालङ्घितः–मिथ्यारामायणमिति किलकिलां कुर्वतस्समुद्रान्तःपातलवणक्षारोदोपरुद्धश्वासस्य मर्कटस्येव मनीषया शोभसे । शास्त्रि - मखिवर्य - पूर्वाचार्याद्यप्रसिद्धत्वेपि सर्वाप्रसिद्धेरसिद्धेरिति दिक् ॥

अथ सकलभाष्यकार - तीर्थकराऽऽप्तत्वाऽनाप्तत्वनिश्चये तावदेक एव न्यायसंचारस्साधीयान् । तथा हि—अस्मदाचार्यस्याऽनाप्तत्वे त्वदाचार्योप्यनाप्त इत्येव प्रतिबंदी । त्वदाचार्य एवाऽऽप्तो नान्य इति वा विशेषतो न मध्व इति वा शापथिकनिर्णयस्याऽऽभिमानिकत्वादतितुच्छता । किं चत्वया "गिरिंभक्षमाणस्यकवाटः पर्पटायत" इतिन्याय उपन्यस्तः । स च पालघाटप्रान्तप्रसिद्धपरिमिताकार "पप्पडा"भिधनामरूपव्याकृतपर्पाटकपरिचर्वणाद्यशक्तस्य शारीकशास्त्रमीमांसाडिम्भस्य तव श्रीविजयीन्द्रयोगीन्द्रसाधितदीक्षितखण्डनखण्डखाद्यपर्वतचर्वणे कथमपिनाऽधिकारश्शक्तिर्वेति स्फुटयति । त्वदीयस्वर्गातिशायिजननप्रान्तप्रसिद्धपरिमितपरिमाणपर्पाटकमीमांसापारदृश्वता पुनर्ब्रह्ममीमांसायामधिकारस्याऽत्यन्ताऽभावमेवाविर्भावयतीत्यलमधुना । परंपरस्तात् ॥

वस्तुस्थितिस्तावदियम् । यदि ब्रूषे शङ्कराचार्य आप्तः पुराणप्रमिताऽऽप्तिमत्त्वादिति तदा सिद्धं मध्व आप्तः पुराणप्रमिताऽऽप्तिमत्त्वादिति । यदि परं प्रत्यवतिष्ठसे मध्वोनाऽऽप्तः कल्पितपुराणवचनैकप्रमिताऽऽप्तिमत्त्वादिति—सिद्धं तदा - शङ्करोपिनाऽऽप्तः कल्पितपुराणवचनैकप्रमिताऽऽप्तिमत्त्वादिति । तत्र शङ्कराऽऽप्तिप्रतिपादकपुराणानामेव पारमार्थिकत्वं मध्वाऽऽप्तिप्रतिपादकपुराणानां तु काल्पनिकत्वमिति विकत्थनं तु निग्रहाऽनर्हमेव ॥

तस्मादत्रायं निष्कर्षः । अन्योदाहृतखिलश्रुत्युपादेयत्वेसमं मध्वोदाहृतेष्वपि । मध्वदृष्टश्रुतीनामन्याऽदृष्टत्वे तन्मतिकालुष्यमेव

कारणम् । नाऽन्यत् । एवमेव मध्वाचार्यस्य प्रतारकत्वे शङ्करादीनामपि तादृशप्रतारकत्वं वज्रलेपायते । यदि शङ्करादीनामाप्तत्वं तादृशमेव तन्मध्वस्य कोहि नाम निवारयिता ? सिद्धं तस्मात्पर्पाटकमीमांसापारदृश्वशास्त्रिनारायणविकत्थनमखिलमपि विद्वेषैकमूलकमिति ॥

स्यादेतत् । "अद्वैतं वेदान्तिमतत्वेन गौतमजैमिन्यादिसंमतमिति" शास्त्रिरोदनमतितरामपहास्यमेव । सांख्यन्याय - वैशेषिकदर्शनाचार्या अद्वैतात्मैकत्वदर्शनं शतशः खण्डयंतिस्मेति रोदनप्रतिहतानुभवसंस्कारेण शास्त्रिणा नूनं विस्मृतम् । अन्यथा न्यायादिसंमतिः कथं प्रमाणिताऽद्वैतप्राशस्त्योपन्यसनेयदद्वैतं न्यायादितीर्थकरैर्निरवशेषं सहस्रशः खण्डितमनुपादेयत्वेन तिरस्कृतं च । भगवता बादरायणेन द्वैतमेव दर्शनं सूत्रेषूपनिबद्धमित्याकरेषु विस्तरः ।

(६) अपि च मध्वाचार्यापकर्षप्रतिपादकसौरपुराणान्तर्गतत्वेनाभिमताध्यायलेखनं यच्छास्त्रिकृतम्—तत्तुच्छम् । तथाहि—यदि क्षेत्रमाहात्म्यादिकं वैष्णवकल्पितं सौरपुराणान्तर्गततया अभिमन्यमाना अध्यायाश्शैवशास्त्रिदीक्षितादिकल्पिता इत्येव राद्धान्तः । अविशेषात् ॥

स्यान्नामशैव - वैष्णवपारस्परिकविद्वेषपुराणवचनकल्पनादि । अबाधितमस्तिप्रबलं प्रमाणं मध्वनिन्दकानां पुनरावृत्तिरहितनिरयगामित्वस्य निश्चायकम् । तथाहि-"प्रत्यक्षं ज्योतिषं शास्त्रं चन्द्राकौंयत्रसाक्षिणा"विति स्पष्टम् । नाडीग्रन्थेषु तावत्तत्रतत्र भविष्यकथनं जागर्ति । तत्र चतुर्मुखनाड्यां देवताप्रकरणे दरीदृश्यते—"हन्तकालस्य कौटिल्यं कलौ किं किं भविष्यति । प्राबल्यं सूर्यपुत्रस्य पापमार्गप्रवर्तकम् ॥१॥ दौर्बल्यं चगुरोस्तत्र परस्परकृतः कलिः । नानाविधानि पापानि संतिनैवचनिष्कृतिः ॥२॥ तथाप्येकं महापापं जगदीश्वरचोरता । अद्वैतं तादृशं चौर्यं करिष्यति कलौ-.

युगे ॥३॥ कालटिग्रामसंभूतः शङ्कराचार्यनामकः। कथं जातः कथं शिष्टः कथं मुण्डी कथं गुरुः ॥४॥ सर्वं तस्य चरितं तु भूमौकश्चित्करिष्यति। नानाविधाश्शनेर्योगास्संति शङ्करजातके ॥५॥ जगदीश्वरसत्तादिचोरकर्मणिदीक्षितः। बुद्धगौडादिकप्रोक्तमद्वैतं तु निरीश्वरम् ॥६॥ प्रवर्तयिष्यति कलौ तदालोकास्सदाऽऽकुलाः। ईश्वरैश्वर्य चोरोयं यच्छनिः चौर्यकारकः ॥७॥ अद्वैतव्याकुले लोके मध्वाख्योब्राह्मणोत्तमः। विष्णुभक्त्यादिसंपूर्णः द्वैतशास्त्रप्रवर्तकः ॥८॥ सर्वोत्तमत्वं श्रीविष्णोः स्थापयिष्यति सर्वशः। योगिवर्यस्समध्वाऽऽख्यो गुरुस्सत्यस्य कारकः ॥९॥ गुरोरनुग्रहादेव द्वैतशास्त्रं करिष्यति। शाङ्करांस्तत्रतत्रायं खण्डयिष्यति युक्तिभिः ॥१०॥ मध्वनिन्दाप्रवक्तारोदुर्भगा नात्र संशयः। पारिजाताख्ययोगोयं लग्नाधिपतिदर्शितः॥११॥ मध्वनिन्दाप्रवक्तारः परजाता न संशयः। दिवि वा भुवि वा यत्रकुत्रापि निवसन्तुते ॥१२॥ परजाता रहः पापा भुविप्रेत्यनिराशिषः। निरयं यान्ति शनिना दुष्टास्ते मध्वनिन्दकाः ॥१३॥ निरीश्वरं जगत्प्रोक्तमद्वैतब्रह्मवादिभिः। अद्वैतचोरान्संहृत्य जगत्तस्मै समर्पितम् ॥१४॥ विष्णवे मध्वयतिना तस्माद्विष्णुपदाश्रितः। विष्णुस्तुष्टश्चमध्वाय जगत्स्वाम्यसमर्पणात् ॥१५॥ कलिकाले शनेर्वीर्यान्नानादेशेषु दीक्षिताः। शास्त्रिणस्संभविष्यन्ति पुराणानां प्रकल्पकाः ॥१६॥ पुराणे कल्पिते क्वापि मध्वनिन्दा भविष्यति। निन्दका निरयं यान्ति यावच्चन्द्रदिवाकरौ ॥१७॥ रामाभिषेकविघ्नेन मन्थरा निरये यथा। तथा निरयगास्सर्वे मध्वतच्छास्त्रनिन्दकाः ॥१८॥ तेषां च जातके नूनं षष्ठ्यंशादिबलाबलम्। विवेचयेत्तदा तत्र दुर्भगत्वं स्फुटीभवेत् ॥१९॥ नानानाडीशास्त्रतत्वनिर्णयेत्र चतुर्मुखे। सत्यं प्रोक्तं फलं प्रोक्तं पूर्वकर्मार्जितं भुवि ॥२०॥" इति। तस्मान्नाडीप्रोक्तदिशा सिद्धं मध्वदूषकाणां निरयैकगामित्वम् ॥

अत्रेदं वक्तव्यम्। मध्वाचार्याणामाप्तत्वव्यवस्थापनाय कूर्म-स्कान्द-ब्रह्मपुराणवचनान्युदाहृतानि श्रीविजयीन्द्रपादैः। अनाप्तत्व-निर्णयायसौरपुराणवचनमुदाहृतं शास्त्रिणा। क्षेत्रमाहात्म्यादीनां कल्पितत्वे सौरपुराणान्तर्गतत्वाभिमानिकाध्यायानामप्याधुनिकक-पोलकल्पितत्वमेवाऽवसीयेत। सौरस्य तामसपुराणत्वात् 'तेन विनातृणमपि न चलती'तिप्रमाणबलेन विष्ण्ववतारस्यापि व्यासस्य तमोयोग्यमोहनार्थं तामसपुराणप्रणेतृत्वं साधुसंगच्छते॥

किंच यत्रकुत्रचिद्रेतोमोचकस्य शिवस्य परिभवसंपादनायापि रत्या न वसंतादिसाहाय्यमपेक्षणीयम्। दग्धेनैव मदनेन प्रतिपन्न-रूपान्तरेण शिवस्य तत्रतत्ररेतःपातनतदनुकूलमनोवृत्तिसंपादनेन, वैष्णवमोहिनीरूपदर्शनक्षुभितचित्तेन पार्वतीपतिना रेतः पातन-संपादनेन च, रतिमदनसाधितशिवपरिभवस्याऽन्यथासिद्धत्वेन, रत्या वसंतसाहाय्यस्याऽनपेक्षणात्सौरपुराणकथातावत्प्रेतान्नपैतृकापू-पभक्षणशीलशास्त्रिदीक्षितादिशैवकल्पितैवेति राद्धान्तः। किंच चतु-र्मुखनाडीसंवादसचिवपाद्मपुराणवचनानामेव सौरवचनापेक्षया प्राब-ल्यमिति संवादविधुरसौरकथाकाल्पनिकी। संवादसचिवपाद्मरीत्या मायावाद एवासच्छास्त्रमिति पर्यवस्यति। एतेन 'पुराणवचनेने'त्यादि 'नात्रप्रपञ्चन्त्य' इत्यन्तं निपुणतमं निरस्तं वेदितव्यम्॥

किंचाऽनाद्यपौरुषेयवेदेषु विश्वामित्रे-न्द्र-वृत्रादिसंघटनस्य प्रा-माणिकत्वे बळित्थर्चोपिवाय्ववतारत्रयपरत्वं किमिति न स्यात्। यतस्त्र्यर्थावेदाः भारतं दशार्थं शतार्थं विष्णुसहस्रनामेति विद्धि। तस्मान्मध्वाचार्याणामेव परमाप्तत्वं तद्दर्शनस्यैवप्रेक्षावदुपादेयत्वमिति सिद्धम्। अपि च त्वदीयसौरपुराणवचनस्याप्पय्यदीक्षितेनाऽनुदा-हृतत्वादप्रामाण्यमेवेति दिक्॥

(७) यदुक्त 'मपशब्दैर्व्यवहार' इत्यादि 'तत्वकौस्तुभे द्रष्टव्य' इत्यन्तम्—तत्तुच्छम्। गोचरशब्दः पुल्लिङ्ग इति मध्वा-

चार्यैरविदित इति तव विकत्थनं वा? तस्य नपुंसकत्वेन प्रयोगः प्रामादिक इति वा? नाद्यः। 'तथापि प्रथमं बुद्धेर्यो निषेधस्य गोचर' इति भगवत्पादैः प्रयुक्तत्वात्। न द्वितीयः। व्याकरणान्तर-निर्णीतसाधुभावत्वात्। एवमेव 'शक्यापवदितुं तस्मात्सातदन्या-भिधायिनी'ति प्रयुक्तत्वात्त्वदधीतव्याकरणप्रयोगा मय्यविदिता एव। ये पुनः प्रयोगास्त्वद्रीत्याऽसाधवस्तेषां व्याकरणान्तररीत्या साधुत्वात्। अस्मदाचार्याणां सर्वज्ञत्वात्पाणिनीयादिसकललौकिक-वैदिकबहुव्याकरणमर्यादानां तेषां बुद्धौसदापरिस्फुरणात्तदीयसकल-प्रयोगाणां साधुत्वावसायादिति न किंचिदनुपपन्नम्। एवमेव 'मिथ्यायाः' 'प्राश्नीक' 'यतेदि' त्यादीनां साधुत्वसमर्थनं द्रष्ट-व्यम्। विस्तरस्तु 'भट्टोजिकुट्टने' 'अप्पय्यदीक्षितकपोलचपेटिका' यां द्रष्टव्यः॥

(८) यदुक्तं 'वेदान्तानामि'त्यादि 'पूर्वपक्षिण इष्टत्वादिति दिगि'त्यन्तम्—तत्तुच्छम्। पूर्वपक्षदशायां वेदान्तानां निर्विशेष-जीवपरत्वस्याऽऽपातप्रतीतिमात्रजन्यत्वात्। तावकीनसिद्धान्तस्य-कथमप्यनुत्थानमेव। सविशेष-निर्विशेषश्रुतिसद्भावेन निर्विशेषस्यै-वाऽनधिगतत्वेन तस्य श्रुतिबोधितत्वमित्यस्य स्वगोष्ठीमात्रनिष्ठप्रला-पत्वात्। अधिगतार्थबोधकत्वेपि वेदान्तानां प्रामाण्यस्याऽनपायात्। किंच त्वदीयमहावाक्य एवाहंधीसिद्धस्य त्वं पदार्थस्याऽनुवादा-द्वेदान्तानां त्वद्रीत्यैवानुवादकत्वस्य दुष्परिहरत्वात्। अहमितिपां सुलपादहालिकादिसिंहासनाधिपत्यन्तसार्वजनीनस्फुटतराऽबाधिता-ऽनुभवसिद्धे भासमानेपि जीवे निर्विशेषस्याऽभाने नियामकाभावा-त्त्वन्मते शास्त्रारम्भसमर्थनं सकलप्रमाणविरुद्धमिति सिद्धम्॥

(९) यदुक्त 'महंधीसिद्धजीवस्ये'त्यादि 'आपादनस्यायुक्त-त्वादि'त्यन्तम्—तत्तुच्छम्। विजयीन्द्रपादवाक्यार्थाऽनवबोधात्। वेदान्तसमानार्थकत्वं शास्त्रस्येति वदतस्तव वेदान्तविषयस्य शास्त्र-

विषयत्वमवर्जनीयम् । अहंधीसिद्धजीव एव पूर्वपक्षिणा शास्त्रविषयतामापादित इति शास्त्रस्याऽनारम्भणीयत्वपूर्वपक्षः समर्थ्यत इति न किंचिदनुपपन्नम् ॥

(१०) शास्त्रिप्रोक्तमन्यत्सर्वं विकत्थनं मध्व-मध्वशास्त्रविद्वेषमूलकम् । शास्त्राभ्यासविधुरतामूलकम् । तथाहि—कर्तृत्वादिरहितजीवे वेदान्तपर्यवसानस्याऽद्याप्यसिद्धेः । आत्मैकत्ववादिनस्तव निर्विशेषस्याप्यहंधीगम्यत्वमनिवार्यमेव । पूर्वपक्षिणा जीवस्य निर्विशेषत्वं विषयाऽभावाज्जिज्ञासाऽनारम्भणीयेतिप्रतिपादनायैवोच्यते न तु तस्यवेदान्तप्रतिपाद्यतासाधनाय । नैवं वेदान्तप्रामाण्यहानिः । प्रामाण्यस्य प्रकारान्तरेणापि निर्वाहसंभवात् । एतेन 'यत्विंत्यादि' 'कल्पनस्य निर्मूलत्वादि'त्यन्तं तत्सर्वं विकत्थनं वेदितव्यम् · तथाहि–विजयीन्द्रपादोक्तदिशा प्रमाणभूतवेदान्तगतिर्नपूर्वपक्षिणावाच्या । अथवा प्रामाण्यसंरक्षणेपि तदाच्छादनेनापि पूर्वपक्षप्रवृत्तेरुपपत्तेः । एवमेव ब्रह्मतर्कसिद्धं प्रामाण्यं वेदान्तानामस्त्येवाऽव्याहतम् । तदाच्छादनेन पूर्वपक्षप्रवृत्तेर्नव्याघातः । नचैवं पूर्वपक्षस्याऽपेशलत्वम् । अपेशलतापरंपरैकसमाश्रये तव मते आत्माचब्रह्म-तस्य चाहमिति सिद्धत्वेपि तद्विशेषं प्रतिविप्रतिपत्तेरिति निर्विशेषचिन्मात्रविशेषविषयविप्रतिपत्तिप्रमाणमात्रप्रतिपन्नसिद्धान्तो यदि नाऽपेशलः, का कथाऽस्मत्पूर्वपक्षाऽपेशलतोद्भावनव्यसनितायाः? निर्विशेषे विशेषविप्रतिपत्तिः कथं प्रामाणिकीति निरूपय शास्त्रिनारायण! विहाय दूरे वाचाटताम् । त्वदीयसिद्धान्ताऽपेशलतापेक्षयास्मत्पूर्वपक्षापेशलता वरेति किमुवक्तव्यम्? तत्रतत्र पूर्वसिद्धप्रामाण्याऽऽक्षेपेण पूर्वपक्षप्रवर्तने न काप्यनुपपत्तिः । तथैव कृतं भामत्याम् । न च वैषम्यम् । ब्रह्मतर्क-ब्रह्ममीमांसाऽङ्गाङ्गिभाववत्तत्राऽथशब्दार्थमुमुक्षुत्वसाधनसंपत्त्यर्थं पूर्वमीमांसाप्रामाण्यस्यापेक्षितत्वात् । अन्यथेहामुत्रार्थभोगविरागस्याऽसिद्धेः । तस्मादत्रसी-

यते शास्त्रिविकत्थनं निग्रहाऽनर्हमिति। एवं च बादरायणसूत्राणां वेदान्तानां च निर्विशेषचिन्मात्रपरत्वं नाद्यापिसिद्धम्। तस्माज्जीव-ब्रह्म-भेदावलम्बनसिद्धान्तसमर्थनार्थं तदभेदावलम्बनेन कृतः पूर्वपक्षोनिस्सीमशास्त्रप्रामाण्यमर्यादाऽन्तर्वर्तित्वादिशोभाशालीति न कश्चित्क्षुद्रोपद्रवः। नापि केनापि नवीनकण्टकेन माध्वाऽध्वनीनानां मुक्तिमार्गोपरोध इति दिक्॥

(११) यदुक्तं 'तन्ने'त्यादि 'हेय' इत्यन्तम्–तत्तुच्छम्। 'द्वासुपर्णावि'त्यादिश्रुतिभिर्जीवेशभेदस्यैव परमार्थतया बोधनेन, श्रुतितात्पर्यनिर्णयार्थं प्रवृत्तेन बादरायणेन जीवेशभेद एव ब्रह्मसूत्रेषु सिद्धान्तित इति वेदान्तानां सूत्राणां च प्रत्यगभिन्ननिर्विशेषचिन्मात्रे स्वारसिकविश्रान्त्यभावाच्छाङ्करीययोजनाया अन्याय्यत्वादप्रामाणिकत्वादनुपादेयतैव॥

किंच नाऽस्माकं शाङ्करग्रन्थाऽपरिज्ञानम्। शाङ्करीयाद्येकविंशति कुभाष्यदूषणचणमध्वभाष्यटीकादिपठनपाठननिरतानामस्माकं शाङ्करीयग्रन्थार्थस्य पूर्वपक्षतया ग्रहणस्याऽवश्यकत्वात्। प्रत्युततवैव मध्व-विजयीन्द्रादिग्रन्थाऽपरिज्ञानम्। अन्यथा, 'अहंधी'त्यादि 'अयुक्तत्वादि'त्यन्तं प्रलपितुं कथमिव न जिह्रेषि। स्यादेतत्। एवमेव 'चन्द्रिका' वाक्यार्थोपि नावबुद्ध एव त्वया। अन्यथा कथं पूर्वपक्षे अनुवादकत्वमापाद्य, इष्टापत्तिं शङ्कित्वा, 'त्वन्मते' वैलक्षण्यादि'त्यादिहेतूकृत्य, 'अनुवादकत्वोक्तेरज्ञानमूलकत्वादि'ति निगमयन्विद्वत्सभासु न लज्जितोसि परमोच्छृङ्खलविकत्थनेन? पूर्वपक्षदशायां श्रुतेरनुवादकत्वं तु न्यायप्राप्तत्वात्सह्यमिति 'चन्द्रिका' वाक्यार्थाऽपरिज्ञानमूलकमेव तव प्रलपनम्॥

(१२) स्यादेतत्। मध्वकृतपुराणवचनोदाहरणस्यापहास्यतां मन्वानश्शास्त्री कथमिव मानवपुराणवचनमुदाहरति शाठ्येन केवलम्? वेदान्तानां निर्विशेषचिन्मात्रपरत्वं प्रतिपादयतस्तव

कृत्स्नस्यापि कर्मकाण्डस्याऽरण्यरुदितत्वं वा जलताडनादिक्षुद्रनिरर्थकव्यापारपरत्वमेवेति कर्मसंसर्गताप्रतिपादनप्रयासेन किं? कर्मणां संसर्गस्य च निषेध्यत्वात् । 'ज्ञानमेकं मुक्त्वा क्रियायागन्धमात्रस्याप्यनुप्रवेश इह नोपपद्यत' इति वदता त्वदीयभाष्यकारेण साधु-समर्थितं कर्मकाण्डस्य स्वार्थैकविश्रान्तिमत्त्वम् । तस्मात्कर्मकाण्डस्य सामञ्जस्यं मध्वोक्तरीत्यैवेति मानवपुराणवचनानि शास्त्रिदीक्षितकपोलकल्पितानीति निष्प्रमाणानि । शैव - वैष्णवादिकल्पिततत्तत्क्षेत्र-माहात्म्यादिवचनवत् ॥

(१३) किंच त्वदीयभाष्यकार एव संदिदिहे वेदान्तानां निर्विशेषचिन्मात्रपरत्वमपि प्रामाणिकं न वेति । 'यथाचायमर्थस्सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्याम' इति हि त्वदीयभाष्यकारप्रतिज्ञा । तत्पर्यालोचनायां विशेषतः 'यथा' तथा 'प्रदर्शयिष्याम' इति प्रयोगस्वारस्येन च निश्चीयते केवलं हठादेवत्वदीयभाष्यकारेण वेदान्तानां सूत्राणां च निर्विशेषचिन्मात्र-परत्वं प्रत्यपादि । न तु तद्बादरायणहृद्गतमिति वज्रलेपायते । तस्माच्छास्त्राणां ब्रह्मात्मताविषयत्वे निर्विषयत्वाच्छास्त्राऽनारम्भपूर्वपक्षोऽस्मन्मते निर्दोष इति सिद्धम् । व्याससंमतं हृदयङ्गमं तु भाष्यं मध्वभाष्यमेव । शाङ्कराद्येकविंशतिकुभाष्यदूषण - बादरायणसूत्रस्वारसिकपारमार्थिकार्थनिर्णयादिनिपुणं सकललौकिकवैदिकसन्न्यायसाचिव्यसनाथसर्वभाष्यमूर्धाभिषिक्तं मध्वभाष्यमेवेति राद्धान्तः ॥

(१४) यदुक्तं 'निर्घटमि'त्यादि 'व्यर्थास्यादि'त्यन्तम्—तत्तुच्छम् । सुखदुःखादिविशेषा जीवानुभववेद्या इतिवद्घटोभूतलवेद्य इत्यभावात्तुच्छं दृष्टान्तोपपादनम् । किं च 'सर्वं शून्यं दरिद्रस्य' 'सर्वं शून्यं तु शास्त्रिणामि'त्यादौ यथा दारिद्र्याऽतिरिक्तविशेषशून्यतायां यथा च स्वनिष्ठसकलशास्त्रार्थविषयकभावरूपाऽज्ञानातिरिक्तविशेषशून्यतायां पर्यवसानस्य प्रामाणिकत्वोप-

पत्तिस्तथा निर्विशेषशब्दस्य सुखाद्यतिरिक्तविशेषशून्यतायां पर्यसानस्य प्रामाणिकत्वोपपत्तिरिति - शास्त्रिप्रलपनं निग्रहाऽनर्हमेव । पूर्वपक्ष्यभिमततादृशसंकोचनिरोधकस्य प्रमाणस्य वा राज्ञामाज्ञाया वा अभावात् । 'अभ्युपगन्तव्यत्वादि'ति प्रमाणमूलकत्वमेवार्थस्य निर्मूलकत्वं तु त्वदीयाऽत्यन्ततुच्छदोषारोपाणाम् । नैवमपि चन्द्रिकोक्तिविरोधाऽपरिहार इति वाच्यम् । क्वचिदंश एवाऽद्वैतरीत्याश्रयणमिति चन्द्रिकावाक्यार्थस्य विजयीन्द्रपादैरुपपादितत्वात् । साकल्येनैवाऽद्वैतरीत्या भवितव्यमिति प्रत्यवस्थानस्य दुराग्रहैकमूलकत्वात् । ब्रह्मात्मताया अहंधीसिद्धप्रत्यगात्मतायाश्चभेदाभावाच्चन्द्रिकोक्तिस्साकल्यार्थपुष्टिशालिनी । नापितदुक्तिविरोधः क्वचिदिति निग्रहाऽनर्हमेवनिखिलमपि शास्त्रिप्रलपनम् ॥

(१५) यदुक्तं 'पदार्थज्ञानकाल' इत्यादि 'यत्किंचिदतदि'त्यन्तम्—तत्तुच्छम् । विहिताध्ययनदशायामापातधर्मिज्ञानाऽभावाच्छ्रवणापेक्षेतिसाधूक्तं विजयीन्द्रैः । पदवर्णस्वरादिना ब्रह्माऽऽपातप्रतीत्यनुदयात् । किंच 'कुंभकस्तदब्रवीत्', 'वृश्चिकस्ये'त्यादिनानाविधनानाविषयकप्रतीतिसंभवाद्विजयीन्द्रोक्तिरेव साक्षी । 'अध्येतव्य' इति विधिबलादध्ययनप्रवृत्तिव 'श्रोतव्य' इति विधिबलाच्छ्रवणार्थं गुरूपसदनोपपत्तेः । वैराग्यस्य प्रकारान्तरेणाप्युदयसंभवात् । तस्मात्सर्वमत्रशास्त्रिप्रलपनं निग्रहाऽनर्हमेव । 'तस्मादि'तितदीयनिगमनंतून्मत्ताऽऽरवायते । प्रत्यक्षविरुद्धब्रह्मात्मतायामेव श्रुतीनां प्रामाण्यं बोधकत्वमिति प्रतिपादयन्नेव तदीयसिद्धान्तस्य निर्वाहं कुर्वाणस्य शास्त्रिणो मध्वमतपूर्वपक्षाऽनुत्थित्यापादनाऽऽरवेण कोहिनाम बिभियात्? न वयं बिभीम इत्यलमधुना । निग्रहाऽनर्हस्यापि शास्त्रिविकत्थनस्य निग्रहस्तत्वनिर्णयमुद्दिश्य स्वकीयकर्तव्यतायामन्तर्भवतीति तादृशनिग्रहे व्याप्रियते ॥

(१६) मध्वादिप्रदर्शिताऽऽद्याधिकरणाऽऽद्यपक्षेकश्चन व्या-

घात आपादितोदीक्षितेन। न्यायोपबृंहितनिर्विशेषजीवस्वरूपप्रतिपादकयत्किंचिच्छात्रविषयपूर्वपक्ष्यनङ्गीकाराङ्गीकाराभ्यां व्याघात आपादितः। विजयीन्द्रपादैर्व्याघातदोषाभासनिरसनं निपुणतमं व्यधायि। व्याघातनिरासप्रकरणे संभावितप्रकाराऽनुवादपूर्वकं क्वचिदभ्युपगमः क्वचिदनभ्युपगमश्च दर्शितोविजयीन्द्रैः । पञ्चपपक्षोपन्यासानन्तरं 'वस्तुतस्त्वि'त्युपक्रम्य 'नव्याहतिदोष' इत्युपसंहारः कृतः ॥

कलिकालशास्त्रिशास्त्रार्थविचारप्रावीण्यं पश्यत निर्मत्सराः प्रामाणिकाः विमर्शकाः!! पञ्चपपक्षेष्वन्यतमं विजयीन्द्राऽनूदितमेवानूद्य विजयीन्द्रपादकृतदूषणमेव शुक इव शास्त्री पठित्वा विजयीन्द्रतीर्थवाक्यान्यात्मीयतया लिखन्नयं पण्डितम्मन्यः कथमिव विजयीन्द्रोक्तिखण्डने शक्तोभवेत्? कथयरे! शास्त्रिनारायण! महाशय! 'अयमात्माब्रह्मे'त्यादि पञ्चपवाक्यानि कस्य? तव वा? विजयीन्द्र गुरुपादानां वा? तानि 'कण्टकोद्धारे' सन्ति वा? किमिति विजयीन्द्रगुरुपादवाक्यचौर्यं त्वया कृतमद्वैतविद्याचार्येण? अथवा तानि वाक्यानि त्वदीयग्रन्थादुद्धृतानि वा? सत्यं वद । सत्यानृतेमिथुनीकृत्यमावद ॥

स्यादेतत् । यदितवविजयीन्द्रोक्तिखण्डनप्रावीण्यम्, सामर्थ्यम्, वादप्रतिवादकथकसंप्रदायपरिज्ञानसंपत्तिरित्यादि, तदा किमितित्वया विजयीन्द्रोक्तनिष्कृष्टपक्षस्य खण्डनं न कृतम्? अज्ञानाद्वा? अशक्त्या वा?

(१७) यदुक्तं 'तयो'रित्यादि 'देवानांप्रिय' इत्यन्तम्— तत्तुच्छम् । विजयीन्द्रवाक्यार्थाऽनवबोधात् । 'तयोः' 'तद्विषयत्व' 'तत्फलकत्व' 'तत्परत्वे'त्यादि तच्छब्दानामर्थास्तावन्निरूप्यन्तां विहाय वाचाटताम् । आक्षेप्याऽऽक्षेपकशास्त्रयोर्भिन्नविषयकत्वेन न व्याघात इति विजयीन्द्रोक्तिः । दीक्षितोद्भावितव्याघातताद्वस्थ्यदोषस्तु विजयीन्द्रपादैरेव निरवशेषमखण्डि ।

त्वया किं करणीयमितिचेन्व्याघाततादवस्थ्यमेव कथमपि निरूपणीयमापादनीयंवा । तन्नत्वयासाधितमिति देवानांप्रियः कः? नूनं शास्त्रिनारायण एव देवानां प्रियो न विजयीन्द्रगुरुपादा इति घण्टाघोषायितम् ॥

(१८) अथ विजयीन्द्रपादोक्ताऽशोकवनिकान्यायस्तुनाऽवबुद्ध एव शास्त्रिणा । जीवब्रह्मभेदावलम्बनेनसमर्थनीयस्य विचारशास्त्रस्य तदभेदाऽवलम्बनद्वाराऽनारंभणीयत्वस्य पूर्वपक्षिणोपपादनीयत्वेन विजयीन्द्रोक्तार्थे प्रक्रियायां वा निरसनीयस्यांशस्यकस्यचिदप्यभावा 'दपास्तमि'तिशास्त्रिविकत्थनं मुग्धप्रतारणार्थमेवेति दिक् ॥

(१९) यदुक्तं 'तन्नेत्या'दि 'अनारम्भपूर्वपक्षोहेय इति दिगि'त्यन्तम्—तत्तुच्छम् । विजयीन्द्रतीर्थवाक्यार्थाऽनवबोधात् । जीवस्वरूपाऽनावरणेपि तदानन्दावरणोपपत्तेः । अन्योन्याश्रयाऽऽपादनं तु प्रामाणिकापहास्यम् । धर्मिग्राहकमानेन विशेषस्य ताद्रूप्येणैव सिद्धेरन्योन्याश्रयाभावात् । अयिशास्त्रिन्! यद्यस्ति शक्तिस्तवनिरस्यतां 'धर्मिग्राहकमानेन विशेषस्य ताद्रूप्येणैवसिद्धि'रितिप्रक्रिया ॥

किं च 'विशिष्टे'त्यादि 'इष्टत्वादि'त्यन्तम्—तत्तुच्छम् । त्वद्रीत्या ब्रह्मणस्सर्वप्रत्ययवेद्यत्वेन विशिष्टविशेष्ययोश्चिन्मात्रैक्यावरुद्धयोरभेदेन विशिष्टज्ञानेन विशेष्याऽज्ञाननिवृत्तेरवश्यंभावात्त्वयाऽनिष्टस्यैवाऽऽपादनं कृतमित्यवेहि । अपरंच भ्रान्तस्तावच्छास्त्रिनारायण एव । नविजयीन्द्रपादाः । यदुक्तं 'तुरीयं ज्ञानरूप' इति तत्तुच्छम् । उपनिषदि 'न प्रज्ञानघनं न प्रज्ञमि'ति ज्ञानरूपत्वनिषेधात् । यदप्युक्तं 'पुंगतस्याप्यज्ञानस्य ब्रह्माऽऽवरकत्वमि'ति—तत्तुच्छम् । व्यधिकरणत्वात् । पुं-ब्रह्मणोरेकत्वस्याद्याप्यसिद्धेश्च । तस्मान्निर्विशेषाऽभेदपक्षे प्रकाशमानस्याऽप्रकाशनमप्रामाणिकमिति

परमते निर्मूलं निष्प्रमाणकमेवशारीरकशास्त्रमित्येव पर्यवस्यति । तस्मात्साधूक्तं भगवत्पादैः—'अतोधिकारि - विषय - फल - योगादि- वर्जितम् । अनेकदोषदुष्टं च हेयं मायामतं शुभैरि'ति ॥

(२०) यदुक्त 'मत एवेत्यादि' 'अपास्तमि'त्यन्तम्—तत्तुच्छम् । पूर्वपक्षिणा ब्रह्मपदार्थस्याऽऽपातत एव गृहीतत्वात् । तत्र निष्कंपप्रवृत्तिनियामकनिर्णयाऽभावात् । ब्रह्मपदस्य सिद्धान्तिना पूर्वपक्ष्यभिमतादन्यस्यैवाऽर्थस्यवर्णनीयत्वात् । आपातप्रतीतिलाघवा- दिशुष्कन्यायापेक्षया श्रौतस्य विध्युद्देशगतस्य ब्रह्मशब्दस्य प्रबल- त्वात्तस्य पूर्वपक्षप्रतिभटत्वोपपत्तेः । ब्रह्मपदस्य निर्विशेषचिन्मात्र- स्वरूपबोधकत्वं त्वच्छपथैकनिश्चितम् । न तु न्यायनिर्णीतम् । ब्रह्म- पदस्य सकलगुणपूर्तिवाचकत्वस्यैव निखिलनिगमगणस्मृत्यादिप्रमा- णप्रतिपन्नत्वात् । विध्युद्देशगतस्वारसिकस्य प्रमाणप्रतिपन्नस्य प्राब- ल्यस्य ब्रह्मशब्दनिष्ठस्य 'गगनकमलिनीकल्पत्वादि'त्युन्मत्तकृते- नाऽऽपादनेन केवलेन प्रमाणविधुरेण निह्नोतुमपलपितुंवाऽशक्यत्वाच्च । शास्त्रीयसमाधानोपन्यासाऽसमर्थेनोन्मत्तेन पूर्वोक्तपर्पाटकमीमांसापार- दृश्वनैव तादृशाऽप्रामाणिकाऽऽपादनस्य कर्तुमुचितत्वात् । स्यादेतत् ॥

(२१) यदुक्तं 'तदपिनिरालम्बनमि'त्यादि 'नासिद्ध्यती' त्यन्तं तत्तुच्छम् । विजयीन्द्रवाक्यार्थाऽनवबोधात् । त्वदीयभाष्ये वेदान्तवाक्यानि सांख्यादयोयोजयन्तीत्यस्ति । तस्माद्यत्रयत्रब्रह्म संस्पर्शसंभवस्तत्रसर्वत्र सांख्याद्यभिमतप्रधानादिपरतैव पूर्वपक्ष्युद्भा- विता । एवमेव 'तदैक्षते'त्यादिवाक्यानामपि सांख्याद्यभिमतपूर्व- पक्षकुक्षिनिक्षिप्तत्वमेवेति ब्रह्मपदेक्षत्योर्वैषम्यप्रदर्शनमकाण्डताण्डव- सहकृतोन्मत्तप्रलपनमेव ॥

अपिचत्वदीयभाष्यभामती पठिता वा त्वया ? वेदान्ताध्या- पकस्य महीशूराऽऽस्थानविदुषस्तव भामती करतलामलकभूता खलु !! शास्त्रिनारायण !! पुनरपि भामतीं पठ रे !! भामतीकारेण 'तदै-

क्षते'त्यादिवाक्यानां सांख्याभिमतयोजना प्रादर्शीति नात्र तदनुवादस्यावसरः । 'अनेनजीवेने'तिवाक्यस्यापि सांख्याभिमतयोजनापि विशद्यकारि । उक्तंच 'एवं कणादमतेपि कथंचिद्योजनीयाः श्रुतय' इति । तस्मादस्मन्मते यथा सर्वेषां वेदान्तानां निर्विशेषपरत्वमवलम्ब्यपूर्वपक्षस्समर्थितस्तथैवसांख्यादिभिरपि सर्ववेदान्तानामीक्षत्यादिघटितानामेव तत्तदभिमतप्रकृत्यादिपरतेति पूर्वपक्ष उत्थापितः । तथा च तवगण्डस्योपरिस्फोटः । ईक्षत्यादिघटितवेदान्तवाक्यानामेव प्रकृत्यादिपरत्वमिति प्रत्यवतिष्ठमानानां सांख्यादीनां पक्षस्य यदित्वदुपदर्शितेक्षतिशब्दः प्रतिभटः, लाघवन्यायावलम्बिसर्ववेदान्तनिर्विशेषपरत्वप्रवृत्तपूर्वपक्षस्य प्रतिभटोब्रह्मशब्दोऽस्मद्रीत्या भवत्येवेति क्व वैषम्यम्? त्वदभिमतशब्दप्रयोगदिशा, 'वैषम्यस्य गगनकमलिनीकल्पत्वात्' । सिद्धं तस्माद्विजयीन्द्रवाक्यार्थाऽनवबोधमूलकमेव तावकविकत्थनमिति । किंच त्वदीयभामत्यादिग्रन्थार्थाऽनवबोधोप्यधिकइति तदज्ञस्य ते विजयीन्द्रोक्तिखण्डनसाहसः कलिकालविलासएवेति स्पष्टम् । तस्माद्विजयीन्द्र वाक्यार्थाऽनवबोधेन, भामत्यादित्वदीयग्रन्थतत्वाऽपरिज्ञानेन, विजयीन्द्रोक्तिखण्डनोद्यमे तव नाधिकारइति सिद्धम् । नापिमखिवर्यभूषणकरणे । मखिवर्यभूषणं च त्वया 'आभातिहाटकसभानटे'ति तदीयभौतिकशरीरत्यागप्रातिसांवत्सरिकदिने पर्पाटकमाषापूपादिभक्षणेन प्रकारान्तरेणवा कामं क्रियताम् । न तु विजयीन्द्रयोगीन्द्रोक्ति दूषणमुखेन । न तत्र तवाधिकारइति स्पष्टमभिहितमित्यलं पल्लवितेन ॥

(२२) यदुक्तं 'ब्रह्मपदस्येत्यादि' 'दिगि'त्यन्तं—तत्तुच्छम् । ब्रह्मशब्दस्य गुणपूर्तिवाचकत्वस्याऽऽकरेषु निपुणतमं निरूपितत्वान्नात्र पुनरुपन्यासस्यावसरः । परस्पराश्रयगन्धलेशोपि नास्ति । गुणपूर्णत्वसिद्धिस्तु शब्दशक्त्या । तद्बलेनैव तस्य प्रमाणतयोपन्यासः । अपौरुषेयस्यापि वेदस्याऽनधिगतार्थबोधकत्वाभावेपि विजयीन्द्र-

पादोक्तरीत्योत्पत्तिशिष्टन्यायावताराऽनपायात् । 'सदेवे'त्यादिवाक्ये त्वद्रीत्या व्याघातस्य दुर्निवारत्वात्। स्वातंत्र्यादिगुणानामेव प्रतीतेर्नाऽस्मन्मते व्याघातः । त्वदीयसंप्रदायस्यतु स्वगोष्ठीमात्रनिष्ठप्रलापत्त्वात्प्रेक्षावदनुपादेयत्वमेवेति सिद्धम् ॥

(२३) यदुक्तं 'तदपीत्यादि' 'दिगि'त्यन्तं–तत्तुच्छम् । विजयीन्द्रतीर्थवाक्यार्थाऽनवबोधात्। सदेतिवाक्यान्तराणां प्रापकत्वं नास्तीतिवैषम्याभावादिति विजयीन्द्रवाक्यार्थतया 'वैपरीत्यप्रसक्ते' रितित्वदुक्तिरुन्मत्तकेलिरेव। विजयीन्द्रवाक्यस्य वैषम्याभावादित्यर्थः। 'सदा'दिवाक्यप्रापितप्रापकाऽनुवादित्वमितिप्रत्यवतिष्ठमानस्य प्रतिबन्दी तयोर्भिन्नशाखास्थत्वादिति । 'सत्यंज्ञानमि'त्यादिवाक्येषु यदुपबन्धबलाभावाद्ब्रह्मशब्दस्यानुवादित्वाऽपरिहार्यत्वकथनमप्युन्मत्तप्रलपनमेव । यदुपबन्धस्यैव त्वदीयदीक्षितेनाऽनुवादित्वबलतयालिङ्गतयावोपन्यस्तत्वादिति किं न पश्यसि? नाप्यत्र कोपि जन्माद्यधिकरणग्रन्थविरोधः । विरोधोद्भावनंतु पूर्ववद्विजयीन्द्रवाक्यार्थाऽनवबोधमूलकमेव । तथाहि–विशिष्टविधिरेव यतोवेत्यत्रस्वीक्रियते। स्थूलप्रपञ्चस्रष्टृत्वस्यानुवादार्हत्वादित्यस्यत्वदभिमतानुऽवादार्हत्वादितिभावः। वस्तुतस्त्वस्मद्रीत्या प्रतिपादनार्हत्वादितिभावः। परकीयोक्तिपरिहासकरणार्थं तदीयप्रयोगाऽनुकरणं प्रौढ्यतिलोकोत्तरं तव शाठ्यं शास्त्रिनारायण!! यद्विजयीन्द्रपादवाक्यवास्तविकार्थावबोधशक्तिविधुरोपित्वं तदुक्तिखण्डने प्रवृत्तः कथमिव न त्रपसे? ॥

(२४) यदुक्तं 'प्रत्युक्तमि'त्यादि 'तस्याऽयुक्तत्वादि'त्यन्तं–तत्तुच्छम् । यतोवेत्यादीनां विशिष्टविधित्वस्वीकारेणाऽनुवादकत्वराहित्यस्य पूर्वमेव समर्थितत्वेन त्वया क्रियासमभिहारेण यदुपबन्धघटितवाक्यानामनुवादकत्वमितिशुकवदुद्गिरणेन न तवसभानिर्वाहशालिपाण्डित्यं नापि विजयीन्द्रपादोक्तिखण्डनसामर्थ्यं सिध्येदिति विरम्यतामेतादृशदुर्व्यापारेभ्यः ॥

किंच ब्रह्मशब्दस्य श्रुतिरूपतया प्रबलत्वान्निर्गुणत्वादिप्रतिपादकवाक्यानां श्रुत्यपेक्षया दुर्बलत्वात्तत्रलक्षणाकल्पनादेरदोषत्वात् । हेयगुणानां प्रामाणिकत्वेपि ब्रह्मणि तत्संसर्गप्रतियोगिताकाऽभाव रूपेण हेयगुणनिषेधस्य सुवचत्वात् । एतेन नाऽप्रसक्तप्रतिषेधशङ्का । नापि सर्षपेमेरुर्नास्तीत्याद्यकाण्डताण्डवशौण्डीर्यप्रदर्शनप्रसक्तिः । युक्तएव मेरुपर्वतपरितःपरिभ्रमणशीलगभस्तिमाल्युदयाद्यस्तावधिसार्वकालिकमाषापूपपर्पाटकादिपरिचर्वणगर्वायमाणानां शास्त्रिणांसदा बुद्धिसन्निहितमेरु - सर्षपादिदृष्टान्तप्रदर्शनेन विजयीन्द्रपादोक्तिखण्डनोद्यमइति । स्यादेतत् । ब्रह्मशब्दस्य गुणपूर्णतापरत्वनिरासोनाद्यापि केनापि तीर्थकरेण, सूत्रकारेण, भाष्यकारेणवा टीकाटिप्पणकारादिभिर्वा साधितइतितत्वेन श्रौतब्रह्मशब्देनैकेन निर्गुणवाक्यानाऽमभेदवाक्यानां बहूनामपि प्रातीतिकादर्थात्प्रच्यावनं प्रामाणिकमेव ॥

किं चाऽऽकाशाधिकरणे सूत्रकृता श्रुतिप्रयुक्तप्राबल्यमेव व्यवस्थापितमिति तत्र न बहुत्वप्रयुक्तप्राबल्योक्तिः । तस्मादुत्सूत्रमुच्छृङ्खलं च तावकं प्रलपनं निग्रहाऽनर्हमेव । अपरं च गुणिशब्दाऽप्रयोगेण संदिग्धब्रह्मशब्दप्रयोगेण भगवतोव्यासस्यप्रतारकत्वमापादयतस्तव निर्विशेषात्मैक्यवादिनः अध्यासपरंपरादिवादिनः, विधिनिषेधादीनामविद्यावद्विषयत्ववादिनः, मन्दानुकंपार्थमुपदिष्टस्य परंतु काल्पनिकस्य सगुणस्योपासनादिकं परप्रतारणार्थमेव कुर्वाणस्य कथंकारं प्रतारककोटिबहिर्भावश्शक्यस्थापन इति निरूपयरे!! शास्त्रिनारायण!! विहायवाचाटताम् । वस्तुतस्तु वेदान्तवाक्यार्थ निर्णयार्थं प्रवृत्तेन भगवता बादरायणेन वेदान्तवाक्यघटित एव ब्रह्मशब्दः साधुप्रायुङ्क्तेति नात्रपूर्वोपपादितपर्पाटकमीमांसाकुशलशास्त्रिकृतचोद्यावकाश इत्यलमधुना । परं परस्तात् ॥

(२५) यदुक्तं 'मन्दमि'त्यादि 'सुवचत्वादि'त्यन्तम्—तत्तुच्छम् । चन्द्रिकोक्तकारिकाप्रतिबन्दित्वेनाभिमता त्वया रचि-

कारिका शाब्दिकाऽऽर्थिकदोषदुष्टा - तथाहि—'निर्दोष'शब्दस्य प्रतिबन्दी 'सदोष'शब्दो न तु त्वत्प्रयुक्तः 'सगुण'शब्दः। त्वन्मते अपौरुषेयत्वेन निर्दोषतया अनधिगतार्थबोधनपरायास्सगुणश्रुतेरपि श्रुतित्वेन निर्दोषत्वाऽविशेषेण तद्बोधितगुणपूर्णतायामिथ्यात्वाऽयोगात् । अन्यथा त्वदीयतत्वमसिश्रुतेरपि मिथ्याऽर्थप्रतिपादकत्वमतत्वावेदकत्वं चाऽवर्जनीयम् ॥

किं च त्वन्मते साक्षिणा जीवस्याल्पगुणता प्रमितेति विकत्थनं निर्मूलमेव। सर्वदा 'चिन्मात्रोऽहं सदाशिव' इति ब्रह्मणैकतामापन्नस्य चिन्मात्रस्य गुणपूर्णताऽनुसन्धानाऽवश्यंभावात्। अन्यथैक्यस्य मिथ्यात्वापातात्! पारिभाषिकत्वापातात्। स्वगोष्ठीमात्रनिष्ठप्रलापत्वापातात् ॥

अपरंच वर्णपदराशिरूपश्रुतेरपि मिथ्यात्वेन मिथ्याश्रुतिबोधितमिथ्याकत्वगुणपूर्त्यल्पगुणतयोः पारमार्थिकसत्यत्वस्याऽवर्जनीयत्वाच्चन्द्रिकाकारिकाखण्डनोद्यतेन शास्त्रिणा तस्या एव कारिकाया अर्थः प्रकारान्तरेण निपुणतमं प्रत्यपादीति घट्टकुटीप्रभातवेलायां विभाति खसूचित्वं प्रापितोवेदान्ताध्यापकश्शास्त्रिनारायण इत्यलमधुना ॥

(२६) यदुक्त 'मत एवे'त्यादि 'अलमसंभाष्यसंभाषणेनेति दिगि'त्यन्तम्—तत्तुच्छम्। 'बृहन्तोह्यस्मिन्गुणा' इत्यस्य कल्पितत्वस्य तुरीयशिवेनाप्युपपादयितुमशक्यत्वात्। ब्रह्माण्डपुराणवचनोदाहरणेनाऽस्मदाचार्यस्य पारमार्थिकश्रुतिवेदमन्त्रद्रष्टृत्वं स्थापितम्। तस्मान्नतस्य श्रुतिकल्पकत्वम्। पूर्वपक्षिणा लाघवाख्य किंचिन्न्यायापातप्रतीत्यवलम्बनेनैव श्रुतीनां निर्गुणपरत्वमुपस्थापितम्। तच्च निपुणतमं सपरिकरं निरस्तं सिद्धान्ते। वस्तुतस्तु सगुण - निर्गुण - ब्रह्मद्वैविध्यस्याऽद्याप्यसिद्धिरेव। प्रमाणाभावात्। विचारविधिवाक्यवर्तिब्रह्मशब्दस्य सकलगुणपरिपूर्णविष्णुवाचकत्वस्य

व्यवस्थापितत्वान्नब्रह्मशब्दोदोलायमानः। अपि तु माषापूप-पर्पाट-कारव्यकोटिद्वयाटीकनदोलायमानं शास्त्रिमन एवेति सिद्धम् । नास्माकं मतान्तराऽज्ञानम् । त्रिविधपरिच्छेदराहित्यबोधे, तादृशपरिच्छेदबोधस्य द्वारत्वाद्गुणपरिच्छेदस्य त्रिविधपरिच्छेदान्तर्गततया तदुभयबोधे अखण्डार्थवादाऽनारंभापत्तेरिति साधूक्तं विजयीन्द्रपादैः। गुणपरिच्छेदसंवलितत्रिविधपरिच्छेदराहित्यप्रवृत्तिनिमित्तकब्रह्मश - ब्दार्थबोधे अखण्डार्थस्य सिद्धत्वात्तद्वादाऽनारंभापत्तिदोषस्य दुष्परिहरत्वात् । किं च वस्तुपरिच्छेदाभाववतोऽभावरूपस्यवाब्रह्मणोघटत्वापातात् । शून्यत्वापातात् । गुणपरिच्छेदाऽतिरिक्तत्वदभिमतवस्त्वपरिच्छेदस्य प्रमाणाऽप्रतिपन्नतया शश - खर - नरशृङ्गादिगवेषणव्यसनिता तवैव शोभामावहतीतिसिद्धम् । एवमेवाऽसंभाष्यः कः? विजयीन्द्रगुरुपादा वा? तद्वाक्यार्थावबोधशक्तिविधुरोपि दुराग्रहेण केवलेन तदीयोक्तिखण्डनप्रवृत्तश्शास्त्रिनारायणोवा ? । स्यादेतत् ॥

(२७) यदुक्त 'मावृतस्ये'त्यादि 'गर्भस्रावेणैवगते'त्यन्तम्—तत्तुच्छम्। जीवब्रह्माऽभेदे जीवस्यापि गुणपूर्तित्वाऽनुभवः स्यादेव। स्वरूपानन्दस्य सुषुप्त्यादावीषदभिव्यक्त्यभ्युपगमात् । त्वन्मते कथमप्यावरणस्याऽनुपपत्तेरेवमापादनम् । त्वदीयगीतार्थवर्णनं त्वखिलाऽपहास्यं - तथाहि — अद्वैतरीतिमवलम्ब्य लाघवाख्यकिंचिन्न्यायेनास्मत्पूर्वपक्षस्योत्थापितत्वादद्वैतरीतिप्रतिपन्नस्ये 'श्वरोहमि'-त्यनुसन्धानस्य निरसनीयत्वादित्यौचित्यमवेहि। किं च षोडशाध्यायगतस्य श्लोकस्याऽष्टादशाध्यायगतत्वेन लिखतस्तव कथं गीतार्थनिर्णयादावधिकारः? 'तानहमासुरीष्वेव योनिषु क्षिपामि' 'मामप्राप्यैव' 'यान्त्यधमांगति'मिति भगवत्स्फुटोक्त्या जीवब्रह्मभेदमेव व्यवातिष्ठिपद्गीताचार्यः ॥

बृहदारण्यकब्राह्मणार्थस्तु नावगत एवत्वया । तथाहि—

चतुर्थब्राह्मणोपक्रमे एकाकीविभेतीत्युक्त्वा समनन्तरमेवद्वितीयाद्वैभयं भवतीति पूर्वपक्षमुपन्यस्यैकाकी बिभेतीति सिद्धान्तेनैकाकी न रेम इति प्रतिपाद्य क्रमशो नानाविधसृष्टिप्रतिपादनादवसीयते—अद्वैतवाद एव भयनिधितया नितरां निन्दित इति । सतिचैवं का कथा तत्र भेदनिन्दायाः? नानाविधसृष्टिराविद्यकीतिप्रत्यवस्थानं तु त्वादृशबालबालिशानामेव युक्तम् । उपनिषत्पुरुषेण तथाऽप्रतिपादनात् ॥

किं चैवं तैत्तिरीयवाक्यार्थोपि त्वया नावबुद्ध एव । तथाहि—'असद्वे'त्युपक्रम्य भीषास्मात्सूर्य उदेतीत्युक्त्वाऽऽनन्दमीमांसाप्रतिपादनेनोसंहारादवसीयते जीवब्रह्मभेद एवोपनिषदर्थ इति । सूर्यादयोपि देवाः यस्माद्भीषा स्वस्वाधिकारिककर्माणि निर्वर्तयन्ति किमु वक्तव्यं मनुष्यास्सकलजगज्जन्माद्यष्टकनियामकश्रीलक्ष्मीनृसिंहाधीना इति तैत्तिरीयोपनिषज्जीवेशभेद एव प्रमाणमिति सिद्धम् ॥

जयविजययोर्विष्णवनुमतशापादासुरभावप्राप्तिरिति विष्णुदर्शनस्य मोक्षाऽप्रयोजकत्वादिति तत्र विकत्थनं निर्मूलकं निग्रहानर्हंच । त्रिषु जन्मसु विष्णुकृतप्रहारेणैव तयोर्भौतिकदेहत्यागः । विष्णुदर्शन तत्प्रसादाभ्यामेव तयोः पुनर्निजस्थानप्राप्तिरितितत्त्वस्याऽपलापं शास्त्रिणां परश्शतमपि कर्तुं न पारयेदित्यलमधुना ॥

ईश्वरोहमित्यत्राऽऽरोपकथालेशस्याप्यभावाद्गर्भस्रावेणैवगतेत्यादित्वदुक्तं दूषणं श्रीविजयीन्द्रयोगीन्द्रपञ्चाननीयसकलशास्त्रसनाथितब्रह्ममीमांसागर्जनश्रवणसमनन्तरनिर्गलितखण्डनप्रतिवादादिगर्भवेदान्तिशृगालस्त्वमेवेति प्रकटीकरोतीति वज्रलेपायते ॥

यदुक्तं 'सविशेषे'त्यादि देवानां प्रियेणेतिदिगि'त्यन्तं—तत्तुच्छम् । विजयीन्द्रवाक्यार्थाऽनवबोधात् । सविशेषाऽभेदपक्षे मध्वमते युक्तमानन्दादेरावरणम् । न युक्तं त्वदीये निर्विशेषाऽभेद-

वाद इति महानिष्टस्यैवाऽऽपादितत्त्वेन तादृशाऽनिष्टस्य दण्डापूपन्यायेनाऽऽनुकूल्यमभिमन्यमानस्य तवापूपभक्षकत्वमेव सिद्ध्यति न विजयीन्द्रोक्तिखण्डनाधिकार इत्यलं पल्लवितेन । कोत्रदेवानां प्रिय इति पूर्वमेव निरणायीति नात्र तस्यावसरः ॥

(२८) यदुक्तं 'स्वर्गकामे'त्यादि 'उपपत्तिरितिदिगि'त्यन्तं—तत्तुच्छम् । देहात्मभेदस्यैव 'ममदेह' इत्यबाधितानुभवेन सिद्धत्वात् तस्य मिथ्यात्वाऽयोगात् । जीवाऽल्पगुणत्वग्राहिसाक्षिण उपजीव्यत्वेन प्रबलत्वात्प्रबलसाक्षिणा जीवब्रह्माऽभेदश्रुतीनां स्वार्थात्प्रच्यावनमावश्यकम् । तस्मात्साक्षिसिद्धस्य जीवाल्पगुणत्वस्य मिथ्यात्वं न कदापि सिध्येत् । ईश्वरस्य सर्वैश्वर्यं न तदीयैश्वर्यनिरोधकम् । अन्यथा सर्वैश्वर्यस्यैव हानेः । ऐक्येच तदैश्वर्यस्य निरोधादीश्वरस्यैश्वर्यं नूनं व्याहन्यते । 'मये'त्यत्र 'त्वये'ति पाठं परिकल्प्य कृतस्याऽकाण्डशास्त्रिताण्डवस्य खण्डनं न कर्तव्यकक्षायामन्तर्भवतीत्युपेक्ष्यते । साक्षिप्रत्यक्षस्योपजीव्यत्वेन प्रबलत्वात् तद्विरोधेनैक्यश्रुतीनामन्यथानयनमनिवार्यमित्युपपादितत्वेन प्रत्यक्षस्याऽपरीक्षितत्त्वापादनमुन्मत्तप्रलपनमेव । तस्मान्मानान्तराविरोधाभावाद्ब्रह्मण्येव विशेषबलादेकत्वादिकम् । न तु जीवे गुणपूर्त्यल्पगुणत्वे । मानान्तरविरोधसत्त्वादिति साधूक्तं विजयीन्द्रपादैरिति दिक् ॥

(२९) यदुक्तं 'विशेषसाध्ये'त्यादि दिगि'त्यन्तम्—तत्तुच्छम् । विशेषसाध्यप्रयोजनस्येश्वरेच्छाशक्तिसंवलितविशेषसाध्यत्वेन विशेषस्यप्रयोजनाभावादिति निषेधस्याऽऽपादनस्यवाऽयोगात् । ताद्रूप्येणैव धर्मिग्राहकमानेन विशेषसिद्धेः । आकरेषु तत्तत्प्रमाणोपन्यासो जागर्तीति नात्र तद्गुणनिकाऽवसरः । ईश्वरशक्तिसंवलितविशेषस्यैवाऽसाधारणकारणत्वोपपादनादीश्वरशक्तिरेव पर्याप्तेत्यवधारणं निर्मूलकमेव । त्वन्मते अविद्याया मूलकारणत्वाङ्गीकारेण को लाभः ? अविद्ययैव सर्वनिर्वाहोपपत्तौ कारणमात्रोच्छेद

प्रसङ्गादिति साधूक्तं विजयीन्द्रपादैः । मूलकारणाऽवान्तरकारणयोस्संबन्धः कः? तयोर्निर्वचनं किं? तयोरेकदेशकालावच्छिन्नत्वं वा? उतभिन्नतदवच्छिन्नत्वम्? यत्किंचित्प्रागभावनिवृत्तिरूपकार्योत्पादाऽव्यवहितोत्तरक्षण एवत्वदीयाऽविद्या निर्वृत्तकार्योत्पादनटनव्यापारा प्रतिसीरापिहिता नर्तकीव नेपथ्यान्तर्निलीयते वा? सदाकार्योत्पादनव्यग्रा वा? उभयथापि दोषात् । किं चत्वदभिमतद्वारकारणव्यापारे कार्योत्पादनाभिमुखे मूलकारणीभूताऽविद्यानिर्व्यापारा व्यवतिष्ठते वा? द्वारकारणानुकूलव्यापारा वा? नाद्यः । निर्व्यापाराया मूलाविद्याया वैयर्थ्यात् । किं च मूलाविद्याकारणताव्यापारनिरोधस्य कारणं तावद्गवेषणीयम् । स च निरोधः किं मूलाविद्याकृत आहोस्विद्द्वारकारणिकः? नाद्यः व्याघातात् । मूलकारणत्वेनाभिमताऽविद्यायाः स्वनिरोधकत्वायोगात् । न द्वितीयः । द्वारकारणस्यमूलकारणव्यापारोपरोधानुपपत्तेः । नापि द्वारकारणानुकूलरूपाविद्येति युक्तम् । क्रमद्वारकारणेनैवोपपत्तेर्वैयर्थ्यतादवस्थ्याच्च । तस्मात्साधूक्तं विजयीन्द्रपादैः कारणमात्रोच्छेदप्रसङ्गादिति । एवमस्मन्मते विशेषाङ्गीकारे न किंचिदनुपपन्नमिति 'न विशेषसिद्धि' रितिशास्त्रिप्रत्यवस्थानं निपुणतमं निरस्तं वेदितव्यम् ॥

(३०) यदुक्त 'माधुनिकप्रलपनंपरास्तमि'त्यादि 'पर्यायत्वाऽऽपत्तेश्चेतिदिगि'त्यन्तं—तत्तुच्छम् । तथाहि - कस्तावदत्राऽऽधुनिकः? विजयीन्द्रपादावा? व्यासराजतीर्थावा? तयोः किंचिन्न्यूनाधिकवयस्कदीक्षितसमकालिकत्वस्य विमर्शकैर्व्यवस्थापितत्त्वात् । किं चाधुनिकत्व - प्राचीनत्वादीनां सापेक्षव्यवहारविषयतया पूर्वोत्तरावधिविशेषितमेवाऽऽधुनिकत्वादि वाच्यम् । एवं च दीक्षितापेक्षया विजयीन्द्रा आधुनिका वा? तयोस्समकालिकत्वात् । आहोस्विच्छास्त्रिनारायणापेक्षया विजयीन्द्रपादा आधुनिका वा? प्रत्यक्षबाधात् । तस्माद्विज्ञायते शास्त्रिनारायणस्याऽऽधुनिकेत्यादिसाधारणसंस्कृतप-

दानां साधुप्रयोगेपि प्रावीण्यं नोपलभ्यतइति कथङ्कारं तस्य सर्वतंत्र स्वतंत्रविजयीन्द्रपादोक्तिखण्डनप्रावीण्यं स्यादितिनिर्मत्सरविमर्शका-एव विवेचयन्तु ।

पारमार्थिकविमर्शकैरन्यदिदमतिशयितेन्द्रजालमहेन्द्रजालादि-मायाविताशालिदूषणं शास्त्रिनारायणेनोद्भावितं तत्वनिर्णयार्थमव-धेयम् । विजयीन्द्रपादास्तु संभावितपरकीयाऽऽक्षेपानुवादपूर्वकं तदाक्षेपखण्डनमकार्षुः । स एव शास्त्रीयस्सांप्रदायिकः पन्थाः । शास्त्रिनारायणस्तु विजयीन्द्रपादाऽनूदितपराभिमताऽऽक्षेपवाक्यान्ये-वाऽऽत्मीयतया लिखन्कथमनुन्मत्तइतिवा, प्रामाणिककोटिगणनार्ह इतिवा विभाव्येत? तथाहि—'न च वैरूप्याश्रयणंदोष'इति विजयीन्द्रपादवाक्यम् । 'वैरूप्याश्रयणस्यदोषत्वादि'ति शास्त्रि-वाक्यम् । 'न चैवमपि विनिगमकाभावोवैपरीत्याऽऽपत्तिश्चेति-वाच्यमि'ति विजयीन्द्रपादवाक्यम् । 'विनिगमकाभावाद्वैपरीत्या-पत्तेश्चे'ति शास्त्रिवाक्यम् । तस्मादवसीयते स्थालीपुलाकन्यायेन शास्त्रिनारायणस्य विजयीन्द्रवाक्याऽपहर्तृत्वम् । एवमेव विजयीन्द्र-पादसरस्वत्यपहारेणशारीरकमीमांसादाशकण्ठ्यमपि ध्वन्यते । स्यादे-तत् । विजयीन्द्रपादवाक्यार्थाऽनवबोधस्तु प्रतिपादितस्तत्रतत्रशास्त्रिण इहाप्यनुपदमेवप्रदर्शयिष्यते ॥

विजयीन्द्रपादीयपूर्वपक्षवाक्यानां शुकशारिकावदुद्गिरणेन तदु-क्तदोषोद्धारश्शास्त्रिणानैवसाधितइति सिद्धम् । हन्तकालस्य कौटि-ल्यम् । अद्वैतविद्याचार्येण शास्त्रिनारायणेन विजयीन्द्रवाक्यार्थोनाव-बुद्धएव - तथाहि—नाशस्थले भेदोऽनुभूयते । भेदएव तत्राऽसत्व-घटकः । तस्माद्यत्रभेदोजागर्ति स्वयमेव न तत्र विशेषस्याऽवसरः । भेदाभावएवहि विशेषप्रवृत्तिः । सोमाऽभावे पूतिका । एवं भेदाऽ भावे विशेषः । एवं स्थिते 'सोमसत्वेपि पूतिके'त्यापादनमुन्मत्तप्रलपन-मेव । नाशस्थले भेदस्यानुभूयमानत्वान्नविशेषप्रवृत्तिः । मुख्ये जागरूके

प्रतिनिधेरप्रवृत्तेः। तस्मा 'त्सोमसत्वे पूतिकाग्रहणवद्धेयत्वादि'ति शास्त्रिविकत्थनं न केवलमनुक्तोपालम्भः अपितु विजयीन्द्रपादवाक्यार्थ परिज्ञानशून्यतामेव प्रकटीकरोति - इति शून्यतायामवतारितश्शास्त्रीतिमुक्तकण्ठमुद्घोषयामः। स्यादेतत्। यदि शास्त्रिणश्शास्त्रीयज्ञानशक्तिरस्ति कामं निरस्यतां नाशस्थलीयभेदानुभवोविजयीन्द्रप्रतिपादितः। तन्निरसनंतु त्वदीयतुरीयशिवेनापि कर्तुं न शक्येत। सति चैवं 'सत्कार्यवादिमते नाशस्थलेपि सूक्ष्मरूपेण कार्यस्यसत्वादि'ति विकत्थनं परमाल्पतममपिशास्त्रज्ञानं न शास्त्रिण इत्येव स्फुटयति। अयि! शास्त्रिनारायण!! सत्कार्यवादिभिस्सर्वत्रनाशस्थले त्वद्रीत्या कार्यसत्वाभ्युपगमे नाशमात्रोच्छेदाऽऽपत्तेरिति तुच्छतमं निग्रहाऽनर्हमेव तावकीनं विकत्थनं तावकीनमापादनम्। किं चा'त्यन्तभेदासिद्धेरि'ति तव विकत्थनस्यकोर्थः? नाशस्थलेभेदाऽभेदमङ्गीकुरुषेवा? स्थूलसूक्ष्मयोरभेदमेववा? घटोनष्टइत्यादिनाशस्थले स्फुटतमाऽबाधितप्रमाणेन भेदस्यैवाऽनुभूयमानत्त्वाद्भेदाऽभेदाभेदाख्यप्रकारान्तराऽसंभवात्साधूक्तं विजयीन्द्रपादैर्नाशस्थले भेदानुभवः भेदानुभवेच विशेषाऽप्रवृत्तिरिति। तस्मादवेहिरे! शास्त्रिनारायण!! भेदाख्यसोमसत्त्वाभ्नविशेषाख्यपूतिकाग्रहणावसरइति विजयीन्द्रवाक्यार्थः। एवं चास्माभिस्सोमसत्वे पूतिकाया अग्रहणात्तावकीनं 'हेयत्वा'ऽऽपादनं तावदत्यन्तहेयमिति सिद्धम्॥

एवमेव स्वरूपसंबंधस्य विशेषाऽनतिरेकादित्यपिसाधु। न च पर्यायत्वाऽऽपत्तिः। विशेषबलादपर्यायतासिद्धिः। नाप्यत्राऽऽत्माश्रयाऽन्योन्याश्रयादिदोषावकाशः। धर्मिग्राहकमानसाचिव्येन संभावितसकलदोषाणां निरासात्। तस्माच्छास्त्रिनारायण!! विरम्यतां विजयीन्द्रोक्तिखण्डनोद्यमदुर्व्यापारात्। 'भेदघटितस्ये'ति वाक्यंतु तव पुनरपि विजयीन्द्रवाक्यार्थज्ञानशून्यतामेवाविष्करोति। सत्यं कृत्स्नमपिखरश्रृङ्गमीमांसां वेत्सि। नपरं विजयीन्द्रगुरुपादवाक्यार्थमितिस्थितम्॥

(३१) यदुक्तं 'परास्ये'ति पल्लवितेने'त्यन्तं—तत्तुच्छम्। अघटनघटनापटीयस्यपि तव माया ईश्वरे तावदीश्वरत्वविरुद्धधर्मं घटयितुं नेष्टे। ईश्वरस्य प्रेक्षावत्त्वाज्जीवभावाश्रयणेनेश्वर आत्मनाशं न कुर्यादिति साधूक्तं विजयीन्द्रपादैः 'कथमीश्वरोपि....जीवभावं स्वस्यानुमन्येत? ईश्वरत्वविरोधादि'ति॥

(३२) यदुक्तं 'नैतत्सारमि'त्यादि 'उन्मथनाऽपत्तेरि'त्यन्तं—तत्तुच्छम्। त्वदभिमताध्यासस्याऽप्रामाणिकत्वात्। अन्तःकरणतादात्म्यस्य जीवे अध्यासस्य सुतरामप्रामाणिकत्त्वाच्च। 'युक्तं भोक्ते'ति 'युक्त' पदस्वारस्यादन्तःकरणस्य भोक्तृकोटिबहिर्भावाऽवगमात्। 'अहमहमि'ति बहुवारमभ्यासा 'चिन्मात्र' 'विलक्षण' 'साक्षी'त्यादिपदयोगेन भोक्तृत्वस्य केवलजीवधर्मोपपत्तेरिति साधूक्तं विजयीन्द्रपादैः। तस्माद्देहेन्द्रियादीनां सहकारित्वाज्जीवस्यैव सुखदुःखादिभोक्तृत्त्वाज्जीवभावमीश्वरः कदापि कथमपि नानुमन्येतेति-स्थितम्। 'बहुवृकाकृष्टमृगन्यायेन' नानाजीववादविशारदतावकीनब्रह्मणएव सार्वकालिकोन्मथनमिति नानाविधप्रतिबन्दीं को निवारयितुं प्रभवेत्?॥

(३३) यदुक्तं 'बालभाषितमि'त्यादि 'पल्लवितेने'त्यन्तं—तत्तुच्छम्। सत्रयागस्य यागविशेषत्त्वात्तत्र यजमानानामेवर्त्विक्त्वादृत्विजामेवयजमानत्वमित्यस्याऽस्मदुक्तदिशैवाऽर्थस्य वर्णनीयत्वात्। अन्यथा सर्वेषामविशेषेण यजमानत्वे यजमानानामृत्विक्त्वे तत्तत्पदप्रवृत्तिनिमित्तोच्छेदापत्तेः। प्रवृत्तिनिमित्तप्रयोगादिपरिपालनेवाऽयजमानेत्याद्यस्मदुक्तिरेव साध्वीति सिद्धम्॥

(३४) यदुक्तं 'नक्षोदक्षममि'त्यादि 'दर्शनादि'त्यन्तं—तत्तुच्छम्। अवान्तरयजमानत्वादिव्यवस्थाऽनभ्युपगमे यजमानादिशब्दप्रवृत्तिनिमित्तमात्रोच्छेदापत्तेरुक्तत्वात्। किंच सत्रेपि यत्किंचित्क्षणावच्छेदेनैकएवर्त्विग्यजमानश्च नभवति। भिन्नकार्यकर्तृत्वेन

विरोधात् । ऋत्विक्कार्यकर्तृत्वविशिष्टक्षणावच्छेदेन यजमानकार्थकर्तृत्वाऽनुपपत्तेः । तस्मादस्मदुक्तार्थएव सामञ्जस्यम् ॥

एवमेव प्रशस्तकर्मत्वज्ञापनार्थमहीनपदहानेन क्रतुशब्दएवस्वारसिक इति पर्यवस्यति । अवाचकशब्दैस्सामान्यशब्दैर्व्यवहारस्य स्वायत्तेपि शब्दप्रयोगे अस्मदाचार्यादीनां सार्वज्ञस्यैवद्योतकत्वान्न किंचिदनुपपन्नम् । शास्त्राऽपरिज्ञानं सर्वथानाऽस्माकम् । तत्तु तव त्वदीयानामेवेति स्पष्टम् । प्राशस्त्यज्ञापनायक्रतुशब्दः प्रयुक्तइत्युक्ते प्राशस्त्याभावस्याऽऽपादयितुमशक्यत्वात् । 'अपिचे'त्यादितुच्छतमम् । जन्तुस्सामान्यवाचकशब्दोरासभ-सारमेयादिसाधारणः । शास्त्रिशब्दोविशेषवाचकः । विशेषवाचकशब्दस्य सामान्ये प्रयोगस्तव सम्मतश्चेद्रासभादिषु शास्त्रिशब्दः कामं प्रयुज्यतामित्यास्तांतावत् ॥

(३५) यदुक्तं 'तदपी'त्यादि 'अनभ्युपगमादि'त्यन्तं—तत्तुच्छम् । प्राबल्यदर्शनादित्यनेनाऽवश्याऽनुष्ठेयतायाएव स्फुरणात् । अनुष्ठेयताऽतिरिक्तप्राबल्यनियामकाभावात् । नित्यफलाधायकत्वस्य तावकशापाथिकसकलप्रामाणिकापहास्याऽनभ्युपगममात्रेणनिरोद्धुं, निषेद्धुं निह्नोतुंवाऽशक्यत्वात् ।

(३६) यदुक्तं 'मीमांसे'त्यादि 'असंभवाच्चे'त्यन्तं–तत्तुच्छम् इतिकर्तव्यताकलापविशिष्टएवक्रतुशब्दप्रयोगनिवेशनात् । '........ अङ्गसहितस्यज्योतिष्टोमस्यैव क्रतुशब्देनोपादानमि'त्यादि 'न किंचिदनुपपन्नमि'त्यन्तेन विजयीन्द्रपादैर्दीक्षितोद्भावितदूषणानां शकलशः खण्डितत्त्वात्तावकीनशुकशारिकाप्रलपनस्य प्रातिस्विकं खण्डनं नात्रकर्तव्यम् । लक्षणयापिग्रहणसंभवादिति विजयीन्द्रपादैरुक्ते 'लक्षणापत्तेरि'तित्वदुक्तं दूषणं तव सकलशास्त्रवित्कोटिबहिर्भावमेवाऽऽविर्भावयति । विजयीन्द्रपादैरेवलक्षणाश्रयणस्योक्तत्वाद्यदि तव शक्तिस्तदुक्तिखण्डने लक्षणाश्रयणस्याऽप्रामाणिकत्वं निरूप्यताम् । वाचाटता त्यज्यताम् । अस्मदभ्युपगतलक्षणायालक्षणापत्तेरितिलेखनेन

केवलेन विजयीन्द्रोक्तेःखण्डनं कर्तुमीहमानस्य तवोन्मत्तप्रलापित्वं कथं शक्यनिरसनमितिचित्रीयन्ते पारमार्थिकविमर्शकाः ॥

(३७) यदुक्तं 'यदपी'त्यादि 'मृतमारणेनदिगि'त्यन्तम्—तत्तुच्छम् । सूत्रेष्वाद्यन्तयोरूहः कार्यः ओंकारस्येत्यत्रोहो न नावमिकोहपरः किंत्वध्याहाररूप इत्युक्ते प्रामाणिकेन वादकुशलेन मखिवर्येण तद्भूषणकारेण त्वया तादृशाऽध्याहारस्यैवाऽप्रामाणिकत्वमुपपादनीयम् । न तन्मखिवर्येण साधितम् । नापि मखिवर्यभूषणकर्त्रा । यद्यत्र नावमिकोहेनैव भाव्यमिति मखिवर्यस्य च तव च दुराग्रहः अबद्धं पठित्वा, अबद्धमेवबुध्वा कुचोद्यमकाण्डताण्डवादि कुर्वाणौ युवामुन्मत्तप्रलापिनाविति वज्रलेपायते । टुप्टीकारीत्या तर्क एव मुख्य ऊह इति चन्द्रिकाप्रतिपादितार्थस्य किं वा खण्डनं मखिवर्यकृतम्? निरूपयरे!! शास्त्रिनारायण!! वाचाटतां त्यज ॥

एवंस्थिते कश्चात्रमृतः? का कथा मृतमारणस्य? विजयीन्द्रपादा वा? मखिवर्यो वा? मृतमारणे हन्त माषापूपपर्पाटकमीमांसाचक्रवर्तिना शास्त्रिणैव व्यापृतम् । तथाहि—पिष्टीकरणे तावत्प्रथमं माषा मृताः । मृतमारणं च माषापूपपरिचर्वणगर्वायमाणेन शास्त्रिणैवेति सिद्धम् । स्यादेतत् । अत्रसंदर्भे 'कृतमि'त्यादिप्रलपनमखिलाऽपहास्यम् । आंग्लभाषायामकुशलाः प्रकृत्याभीरवस्तदीयक्लप्तमरणात्पूर्वमेवाऽनेकवारं केवलं भीत्यैव म्रियन्त इत्याभाणकेनोत्प्रेक्षितम् । तदनुसारेण मध्वमतखण्डनदुराग्रहीतत्खण्डनाऽकुशलः विवादभीरुर्मखिवर्य एव क्रियासमभिहारेण विजयीन्द्रगुरुपादैः पशुमारंमारित इति स एव मृतः । माषापूपपर्पाटकीयप्रक्रियापरामर्शिशास्त्रिनिष्ठमृतमारणव्यसनिता तु यावद्द्रव्यभाविनीति 'कृत'मित्युपसंहारो न युज्यत इति तत्वम् । स्यादेतत् । तस्मादस्मिन्प्रकरणे शास्त्रिविकत्थनमखिलमपि निर्मूलकमितिस्थितम् ॥

(३८) यदुक्त 'मयमि'त्यादि 'प्रदर्शितमि'त्यन्तम्—तत्तुच्छम्। 'अपवदितुमि'ति प्रयोगस्याऽऽचार्यैरनुपदमेवकृतत्वात्तद्रूपाऽपरिज्ञानं नाऽऽपादयितुं शक्यं युक्तं वा। 'अपोदितुमि'त्यस्य व्याकरणान्तरपरिगृहीततयाऽस्मदाचार्यस्य सर्वज्ञत्वेन सकलव्याकरणाभिज्ञतया तत्कृतप्रयोगस्य साधुत्वमवसीयते ॥

(३९) यदुक्तं 'तदि'त्यादि 'मात्र' इत्यन्तम्—तत्तुच्छम्। विजयीन्द्रवाक्यार्थाऽनवबोधात् । वन्ध्याकन्यावरान्वेषिणस्तवैव तद्गर्भस्रावपरिदेवनादि शोभते । दुःखादीनामात्मधर्मत्वस्योपपादितत्त्वादन्यधर्मस्यनाऽन्यत्राऽध्यासोस्मन्मते । स्वातंत्र्यसंवलिताऽऽत्मीयत्वेनाऽध्यस्यन्त इति भावस्य विजयीन्द्रपादैर्वर्णितत्त्वात् । आत्मधर्मत्वस्य बाधाऽदर्शनात् । अध्यस्ताऽनध्यस्तयोः परं बाधाऽबाधाभ्यामेव विवेकात् । विजयीन्द्रपादवाक्यगत 'दर्शन'पदस्य 'दृष्टान्त' इत्यर्थ इति भ्रान्त्या दूषणाय प्रवृत्तः शास्त्रिनारायणः कीलोत्पाटीरामसैनिक इव । 'अविद्यानिवृत्ता'वित्यादितुच्छम्। अस्मदभिमताऽध्यासस्य प्रकारान्तरेण निरूपितत्वात्। दर्शनशब्दस्तु तत्र राद्धान्त वाचको न 'दृष्टान्तवाचकः 'अविद्यास्तमय' इति त्वदीयसिद्धान्तानुसारेणाविद्यायाः ज्ञाननिवर्त्यत्वस्य त्वयोक्ते तादृशनिवर्त्यत्वमनादिभावस्य न युज्यत इति मयाऽऽपादयितुं शक्यत्वादिति विजयीन्द्रपादवाक्यार्थः। अस्माकं तु शास्त्रबलादेवाऽनाद्यविद्याख्याऽज्ञाननिवृत्तिरिति नैषा दार्शनिकी निवृत्तिः । तस्मान्नकोप्ययंशस्सिद्धान्तविरुद्धोस्मन्मत इति सिद्धम् । तावकीन दृष्टान्तशब्दनिर्वचनं तु 'कपिरपिचे'त्यादि 'वैकृतं तस्ये'त्युक्तचेष्टाविलासमेवाऽऽविष्करोतीति किमु विशिष्य वक्तव्यम्? अस्मिन्प्रकरणे दृष्टान्तप्रदर्शनस्यौचित्यं मखिवर्यो जानाति तद्दूषणकर्तावेति परं परस्तात्। सत्यं 'दर्शने' 'निदर्शनम्' 'निदर्शने' च 'दर्शन' मध्यस्याऽन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाऽविद्यावद्विषयकः कोपिलो-

कातिशायिकोलाहलो नूनं शास्त्रिणा नात्प्यते महतासंरम्भेणेति पारमार्थिकविमर्शका विदांकुर्वन्तु ॥

(४०) यदुक्तं 'तदपि मन्दमि'त्यादि 'दिगि'त्यन्तम्— तत्तुच्छम् । प्रत्यग्ब्रह्मैक्यपदस्य ब्रह्मपरत्वाऽयोगात् । यदि युज्यते तदा ब्रह्मजिज्ञासेत्यत्र प्रत्यग्ब्रह्मैक्यजिज्ञासेति स्यात् । वस्तुतस्तस्याऽजिज्ञास्यस्वात् । तस्माद्भाष्यभामती विरोधोदुष्परिहरः ॥

किंच 'क्रियायां' विधिरितिवदन् शास्त्री महाकूष्माण्डमल्पतमान्नकणेषु निह्नोतुमेव यतते । समन्वयाधिकरणे ज्ञाने विधिर्निराकृतः । 'सहकार्यन्तरविधि' सूत्रे विधिरङ्गीकृतः । 'मुनिशब्दस्यज्ञानातिशयार्थत्वात् । मननान्मुनिरि'तित्वदीयं भाष्यम् । नात्र क्रियागन्धोपीति 'क्रियायामि'ति शास्त्र्युक्तिर्वितथा ।

किंच सूत्रप्रदर्शनेन पूर्वापरविरोध उद्भाविते विजयीन्द्रपादैः किमिति शास्त्री बृहदारण्यकवार्तिकवाक्यमुदाहरतीति विचारणीयम् । नूनमाम्रान्पृष्टोत्र शास्त्रिनारायणः कोविदारानाचष्टे । तस्माद्दुष्परिहरोत्र त्वदीयभाष्यस्थपूर्वापरविरोधः ॥

अपिच जीवाश्रिताऽविद्येति त्वदीयाः केचित् । 'आश्रयत्वविषयत्वभागिनीनिर्विशेष (निर्विभाग) चितिरेवकेवले'त्यन्ये । विरोधोत्रापि दुष्परिहर एव । एवमेवाऽन्यत्रापीति साधूक्तं विजयीन्द्रपादैः । अद्वैतानुसारिपारस्परिकसैद्धान्तिकावान्तरभेदानां विरोधित्वाभावादित्यादिप्रत्यवस्थानं तु परप्रतारणायैवेति न तस्य प्रातिस्विकेन रूपेण निरासस्यावश्यकतेति दिक् । तस्माज्जीवेशाऽभेदे ईश्वरस्य दुःखित्वमवर्जनीयमिति तयोर्भेद एव पारमार्थिकोराद्धान्त इति सिद्धम् ॥

(४१) यदुक्तं 'कस्यचिदि'त्यादि 'युक्तमुत्पश्याम' इत्यन्तम्— तत्तुच्छम् । 'कोह्येवे'ति जगद्व्यापारस्य सुखोद्रेकप्रयुक्तत्वे श्रौतं

प्रमाणमुपन्यस्तं विजयीन्द्रैः । तत्प्रमाणप्रतिभटत्वेन त्वया कृतस्य रामायणवचनोपन्यासस्योन्मत्तकेलित्वात् । मध्वाचार्यकृतपुराणवचनोपन्यासपरिहासदुर्व्यापारशीलेन त्वया मखिवर्यैणवा पुराणवचनोदाहरणं किमिति परिहासास्पदमकारि ? ॥

किंच रामायणवचनस्य मनुष्यदृष्ट्या रामकृतप्रलापादिपरत्वात्तस्य जगद्व्यापाराऽसंस्पर्शित्वात् । वृद्धिह्रासयोः श्रुतिप्रतिपन्नत्वेन प्रबलत्वात्तन्निर्वचनं युक्तमेव । तस्मादीश्वरस्य जीवभावोनितरां हेय इति सिद्धम् ॥

(४२) यदुक्तं 'लोकमर्यादे'त्यादि 'भाव' इत्यन्तम्—तत्तुच्छम् । प्रादोषिकनटनशीलशिवातिवादिमूर्धाभिषिक्ततदंशतद्गुणांशभूतमखिवर्यतद्भूषणकर्तॄणामेव नटनरोदनादि साधुसंगच्छत इति प्रतिपादितमस्माभिः "प्राचीन-कण्टकोद्धारे" सप्तविंशतितमश्लोके तत्रैवाऽनुसंधेयम् ॥

(४३) यदुक्तं 'तत्रब्रूम'इत्यादि 'मृतमारणेने'त्यन्तम्—तत्तुच्छम् । पूर्वपक्षिणः जिज्ञासावाक्योपस्थितिकाले नैकमेवेत्यादिवाक्योपस्थितिरितित्वया वक्तुमशक्यत्वाद्भेदशङ्काऽक्षराऽऽनुगुण्यशालिनी प्रामाणिकी न साहसिकीति विद्धि । ब्रह्मशब्देन भेदसाधनस्यैव प्रामाणिकाऽध्वनीनसमाश्रयणीयत्वात् । तत्रतत्रतात्पर्यभेदसत्त्वान्नाऽधिकरणान्तराऽनारम्भपौनरुक्त्यशङ्का । तस्मादेकेनगुणपूर्णत्ववाचिना ब्रह्मशब्देन सर्ववेदान्तावलम्बिनिर्विशेषचिन्मात्रपरत्वपूर्वपक्षस्य निरास एव शास्त्रसंमतः प्रामाणिकः पन्थाइतिसिद्धम् । 'अलं मृतमारणेने'ति प्रलापस्तु भूमावधः पातितस्यापि न श्मश्रु पांसुलमितिविजयोद्घोषसमइत्यपहास्यः ॥

(४४) यदुक्तं 'समाधिरि'त्यादि 'अविरोधाचे'त्यन्तम्—तत्तुच्छम् । विजयीन्द्रवाक्यार्थाऽनवबोधात् । सविशेषाऽभेदपक्षइत्यस्यार्थस्त्वया नाऽवबुद्धएव । शृणु-तत्राऽभेदोजीवतदानन्दा-

दीनां । ब्रह्मतदानन्दादीनाम् । सचाऽभेदोविशेषप्रमितइति स विशेषाऽभेदपक्षोनाम मध्वराद्धान्तएव । एवमेव निर्विशेषाऽभेदपक्ष-इत्यस्यत्वदीयनिर्विशेषचिन्मात्रैक्यवादइत्यर्थः । तत्रैव सार्वज्ञ्यादीनां कदाप्यावरणाऽनुपपत्तिः । जीवभावस्य ब्रह्मैश्वर्यविरोधित्वस्य व्यवस्थापितत्त्वादणुत्वमहत्वादीव न कदापि ब्रह्मणोजीवभावइति सिद्धम् ॥

(४५) यदुक्त'मपास्त'मित्यादि 'यत्किचिदेतदि'त्यन्तम्—तत्तुच्छम् । जीव-ब्रह्मविरुद्धगुणयोः प्रमितत्त्वेन तत्र प्रत्यक्षं मानम् । अनुमानमपि मानम् । श्रुतिरपि । शास्त्राऽभ्यासेन ब्रह्मगुणानां ग्रहणात् साक्षिणाऽल्पगुणत्वादिग्रहणादितिविरुद्धगुणयोगित्वग्राहकत्वाद्भेदे प्रत्यक्षं प्रमाणं भवत्येव । नैवं भेदश्रुतीनामधिगतार्थता । शास्त्रसाचिव्यसमर्पकत्वात् । ईशसार्वज्ञ्यबोधकत्वात् । तस्य च प्रमाणान्तरेणानधिगम्यमानत्वात् । अन्नमयादीनामेकत्वस्याऽनन्यथासिद्धप्रमाणप्रतिपन्नत्वात् । त्वदीयचिन्मात्रैक्यस्य तादृशप्रमाणप्रतिपन्नत्वाऽभावात् । तस्मात्परमेश्वरस्य न कदापि जीवभावः । सतिच जीवभावे शपथमात्रसाध्याऽऽपादने ब्रह्मैश्वर्यभोगादीनां स्यादेव जीवे अनुसन्धानम् । न च तदस्ति । तस्मान्नब्रह्मणः कदापि जीवभाव इति सिद्धम् । नाऽपि जीवस्य ब्रह्मभावइति ॥

(४६) यदुक्त 'मेकीभावस्ये'त्यादि 'दिगि'त्यन्तम्—तत्तुच्छम् । एकीभावस्यैकीभावत्वेनाऽनुसन्धानाभावएकीभावस्यैवाऽभावादनुसन्धानप्रतिबन्धकत्वानुपपत्तेः । अनुसन्धानरहितैकीभावस्य शून्यताऽऽपातात् । विमतानि शरीराणि देवदत्तस्यैव भोगायतनानीत्यादि प्रलपतस्तवैकीभावेप्यनुसन्धानस्य भोक्तृत्वप्रयुक्तस्य प्रतिपादनात् । किंच 'ममैवांशोजीवलोक'इत्यस्यानन्तरं 'उत्तमः पुरुषस्त्वन्य' इत्युपसंहारेणावसीयते जीवेशाऽभेदो न गीतासम्मतइति । स्यादेतत् । जीवाअंशाइतिचेद्ब्रह्मांशीति भगवानंशी । नूनं तव मते अंशित्वस्यमिथ्यात्वसाधकहेतुतयोपन्यासाद्ब्रह्म तव

मिथ्येत्येव प्रसज्येत । एवं ब्रह्मणोमिथ्यात्वं वदतस्तव जिह्वा कुतो न पतितेत्येव प्रतिबन्दीपर्यनुयोगः । तस्माद्गीतायाः अस्मदुपन्यस्त एवार्थः । किंचाऽपकृष्टदेशादिसंबंधस्य सत्यत्वादुपपद्यते अर्जुनस्येन्द्र-भोगाऽननुसन्धानम् । त्वदीयोपाधीनामलीकत्वेनवैषम्याज्जीवस्येश्वर-भोगानुसन्धानप्रतिबन्धकसामग्र्यभावात्साधूक्तं विजयीन्द्रपादै'र्ब्रह्म-णैकतांगतस्य जीवस्य तद्गतभोगानुसंधानाऽवश्यंभावादि'ति ॥

किंचाऽर्जुनादीनामाखण्डलाद्यंशत्वस्य भारतादिप्रमाणप्रति-पन्नतया जीवेशाऽभेदस्यतु सकलप्रमाणविरुद्धतया 'यदायदा...... तदात्मानं सृजाम्यहमि'ति भगवदवताराणां प्रमाणसिद्धत्वेपि भगवतो जीवभावस्य कथमप्यसिद्धतया 'ममैवांश' इत्यस्याऽर्थान्तरस्यैव वर्णनीयतया जीवेशभेदएव गीतोपनिषत्सूत्रादिपारमार्थिकाऽर्थ इति सिद्धम् ॥

(४७) यदुक्तं 'नैतद्भद्रमि'त्यादि 'आस्तामेतदि'त्यन्तम्—तत्तुच्छम् । त्वदुदाहृतछांदोग्यवाक्यस्य जीवस्येश्वरात्मत्वबोधकत्वा-भावात् । तत्र प्रकरणे 'एकादेवता' 'तिस्रोदेवताः' 'जीवेन' 'आत्मना' 'नामरूप' इत्यादिप्रयोगवैचित्र्यदर्शनात्तस्य वाक्यस्य न जीवब्रह्मैक्येतात्पर्यमपितु भेदएवेति सिद्धम् । तस्मात्साधूक्तं विजयी-न्द्रपादैः 'जीवस्येश्वरत्वेहेतूच्छित्तेरेवविपक्षेबाधकत्वादि'ति। 'वस्तुत' इत्यादि तु तुच्छादपि तुच्छतमम्—आखण्डलस्याऽविद्यामहिम्ना-ऽर्जुनभाव इति प्रक्रियायाः प्रमाणविरुद्धत्वेनाऽखिलापहास्यत्वादाख-ण्डलार्जुनदृष्टान्तेन जीवेशाऽभेदसाधनोद्यमोमखिवर्यस्य तवचेयमपरा कापिकपोले चपेटिका ॥

(४८) यदुक्त 'मवच्छेदके'त्यादि 'दिगि'त्यन्तम्—तत्तु-च्छम् । अवच्छेदकभेदेन विरोधपरिहारोपपत्तेरितिविजयीन्द्रपाद-वाक्यस्याऽर्थोनूनं नाऽवबुद्ध एवत्वया । अत एवभेदस्यापि तथा वक्तुं शक्यत्वादित्यादिप्रलपसि । भेदाऽभेदयोस्तवमते विषमसत्ताकत्वात् ।

अनुसन्धानाऽननुसन्धानावच्छेदकादिभेदादीनां सत्तावैषम्याधीनसिद्धिकत्वाभावात् । तस्मात्साधूक्तं विजयीन्द्रपादैरभेदकार्यस्यकस्याप्यभावे पारिभाषिकः स्यादभेद इति । नैवं भेद आपादयितुं शक्यम् । भेदकार्याऽनुसन्धानभेदस्य प्रत्यक्षसिद्धत्वात् । नापि भेदः काल्पनिकोअभेदस्तुवास्तविक इति शक्यं प्रत्यवस्थातुम् । तादृशत्वदीयगोष्ठीमात्रनिष्ठप्रक्रियाया अप्रामाणिकत्वादद्याप्यसिद्धेः। किंच वैपरीत्यस्यैव प्रामाणिकत्वेन सिद्धेश्च भेद एव जीवेशयोः पारमार्थिकः । भेदकार्याऽनुसन्धानस्य प्रमाणप्रतिपन्नत्वात् । अभेदस्तुपारिभाषिकः काल्पनिकः अभेदकार्याऽनुसन्धानाऽभावादिति दिक् ॥

तस्मात्तत्पारिभाषिकतापत्तिदोषोद्धारस्त्वयानाऽकारीति स दोषोवज्रलेपायते । सुपुप्तौ मुख्यत्वमभेदस्येति जल्पनं निर्मूलमेव । तत्राऽभेदस्य मुख्यत्वे तत्रैवाऽनुसन्धानं स्यादित्यनिष्टापत्तेस्त्वयाऽपरिहृतत्वात् । किंच जाग्रत्स्वप्न - सुषुप्ति - तुरीय - तुरीयातीतादिसार्वावस्थिक - सार्वकालिकचिन्मात्रैक्यवादिनस्तव मते जीवेशाऽभेदे तदभेदकार्यस्याऽवश्यंभावादनुसन्धानाऽतिरिक्ततदभेदकार्याभावादनुसन्धानप्रसङ्गोदुर्वार इति साधूक्तं विजयीन्द्रपादैः ॥

(४९) यदुक्तं ‘तत्रे’त्यादि ‘दिगि’त्यन्तम्—तत्तुच्छम् । शास्त्रसिद्धसकलगुणपूर्णत्वसाक्षिप्रत्यक्षसिद्धाऽल्पगुणत्वाद्यवधारणेन प्रत्यक्षं भवत्येव प्रबलं प्रमाणमद्वैतश्रुतीनामात्मलाभनिरोधकम् । तादृशप्रत्यक्षसाहाय्यसचिवमनुमानमपि भवति जीवेशभेदस्थापकं तदभेदनिरासकं प्रमाणम् । एवं श्रुतिरपि । तस्मात्प्रमाणत्रयमप्युपरुणद्धि त्वदीयैक्यश्रुतिवाक्यादीनां जन्मलाभमिति सिद्धम् ॥

गजोपिमिथ्या पलायनमपीति वदतस्तव मते गजपलायनस्यमिथ्यात्वान्मशकानां तु का कथेत्यादिप्रश्नस्योन्मत्तप्रलापमात्रत्वात्सार्वजनीनन्यायोदाहरणेपि तव न सामर्थ्यमिति स्फुटं प्रतीयते ॥

प्रबलप्रमाणविरोधे तात्पर्यलिङ्गसानाथ्यस्याऽकिंचित्करत्वात् । तात्पर्यवत्या अपि श्रुतेः प्राबल्यं प्रामाण्यं च मानान्तरविरोधे बाध्यत इति यजमानप्रस्तरप्रसङ्गोदुर्वारः । 'सन्घट' इति सत्तानुवेधाद्ब्रह्मविवर्तः प्रपञ्च इति वदतस्तत्र चिज्जडैक्याऽङ्गीकारोदुर्वारोगत्यन्तराभावात् ॥

जीवब्रह्मभेद श्रुतीनां ब्रह्माऽभेद श्रुतीनामेवाऽऽत्मलाभ इति निपुणतमं निरूपितत्त्वा'त्वदिष्टार्थाऽसिद्धे'रित्यापादनं विजयीन्द्र वाक्यार्थाऽनवबोधमूलकमेवेति निश्चीयते । ब्रह्ममीमांसाशास्त्रमेव भेदश्रुतीनां न केवलमपि तु सर्वश्रुतीनां निखिलकल्याणगुणपरिपूर्णे श्रीलक्ष्मीनृसिंहे समन्वय इति निष्प्रत्यूहं प्रतिपादयत्पारमार्थिकभेदशास्त्रं जागर्ति । नैवं शास्त्राऽनारम्भशङ्काऽस्मत्सिद्धान्ते । पूर्वपक्ष्युद्भावितनिर्विशेषचिन्मात्रपरत्वस्य श्रुतीनां निरसनीयतयाऽस्मत्सिद्धान्तप्रकारेण जीवब्रह्मभेदावलम्बनेनैव शास्त्रारम्भस्य व्यवस्थापिततया न कश्चित्क्षुद्रोपद्रव इति सिद्धम् ॥

(५०) यदुक्तं 'परास्तमि'त्यादि 'दिगि'त्यन्तम्—तत्तुच्छम् । जीवेशभेदश्रुतीनां प्रबलत्वस्य व्यवस्थापितत्त्वाज्जीवब्रह्माऽभेदश्रुतीनां प्रतीतार्थात्प्रच्यावनस्याऽऽवश्यकत्वेन ब्रह्मभेदाभ्युपगमे विरोधवज्जीवब्रह्मभेदाभ्युपगमे विरोधस्य कस्याप्यभावात्प्रत्युत जीवब्रह्माऽभेदपक्ष एव सकलप्रमाणविरोधाख्योपरोधस्य सत्त्वाज्जीवेशभेद एव प्रामाणिको राद्धान्त इति भावः । परिच्छेदस्य त्वदभिमतस्य मिथ्यात्वसाधकताया अभावात्परस्य जीवाद्भेद उपपद्यते । 'द्वाविमौपुरुषौ' 'उत्तमः पुरुषस्त्वन्यः' 'द्वासुपर्णा' इतिप्रमाणबलेनेश्वरस्य जीवानां परस्परं भिन्नतयैव ताद्रूप्येण तत्तद्धर्मिग्राहकमानेन सिद्धेरिति त्वदीयतुच्छचोद्याऽनवकाशः ॥

तस्मान्नश्रुतिस्तव जीवब्रह्माऽभेदे प्रमाणम् । नाप्यनुमानं निर्विशेषचिन्मात्रैक्यवादिनस्तवानुमानं च ब्रह्म, ब्रह्माऽभिन्नम् , ब्रह्म-

त्वादित्येव पर्यवस्येत् । घटोघटाऽभिन्नः घटत्वाद्घटवदित्यपिवा । तथा च साध्य - हेतु - दृष्टान्ताऽसिद्धेः । किंच घटोब्रह्माऽभिन्नः सत्ता-नुवेधवत्त्वाद्ब्रह्मवत् पटवत् घटान्तरवदिति प्रतिबन्ध्या चिज्जडैक्या-ऽऽपातात् । अपरंच जीवोब्रह्मभिन्नः आत्मत्वाज्जीवान्तरवदिति प्रकरणसमः । जीवः ब्रह्मभिन्नः परतन्त्रत्वाज्जडवत् जीवान्तरवदिति सत्प्रतिपक्षः इति दिक् ॥

नापि प्रत्यक्षं जीवेशाऽभेदेप्रमाणम् । प्रत्यक्षस्य पारमार्थिक-भेदग्राहित्वात् । अनयैव दिशा त्वदभिमताऽन्यप्रमाणानामप्यभेद-साधकत्वाभावस्सूपपाद इति परं परस्तात् । तस्मात्सकलप्रमाणशून्यं तावकीननिर्विशेषचिन्मात्रैक्यमतं प्रेक्षावद्भिरुपेक्षणीयमिति सिद्धम् ॥

(५१) यदुक्तं 'तन्ने'त्यादि 'व्यभिचारादि'त्यन्तम्—तत्तुच्छम् । कार्यभेदस्तावद्वास्तवकारणभेदव्याप्य एवेति न त्वदुक्त-तुच्छविकल्पावकाशः । अपूर्वाऽन्यथानुपपत्त्या अपूर्वभेदान्यथानुप-पत्त्या तत्र स्वत एव भेद इति विजयीन्द्रपादैरुपपादितत्त्वात्तद्वाक्या-र्थाऽनवबोधमूलकमेव तावकीनं विकत्थनं प्रलपनं च । तस्मान्न तव द्वितीयपक्षस्योत्थितिरपि । यदुक्त 'मपिचे'त्यादि 'दिगि'त्यन्तं तद्बा-ल्याधीतसमनन्तरविस्मृतमीमांसापरिभाषादिगुणनिकाकौशलप्रकाश -नार्थं न विजयीन्द्रपादोक्तिखण्डनसमर्थमित्युपेक्ष्यते । तस्माच्छब्दा-न्तरादिप्रमाणबलेनापि सिद्ध्यत्येव जीवेशभेद इति न किंचिदनुप-पन्नमस्मन्मते ॥

(५२) यदुक्तं 'तन्ने'त्यादि 'पल्लवितेने'त्यन्तम्—तत्तुच्छम् । तत्वमसिवाक्यार्थस्य वर्णनमस्मन्मते प्रकारद्वयमाश्रित्य कृतम् । 'तत्' 'त्व'मसीति पदच्छेदेपि तत्साहचर्यतदधीनत्वादिभिस्तद्व्यप-देश इति समर्थितम् । 'अतत्' पदच्छेदोपिचारुतामावहति । नवकृ-त्वोऽभ्यस्तदृष्टान्तानुरोधात् ॥

नैवं निषिद्धस्याऽभेदस्याऽप्रसक्तिरप्रसिद्धिर्वा । 'अहंब्रह्मा' सीत्यादिवाक्यान्तरसमधिगताऽऽपातप्रतीतिजन्यपूर्वपक्ष्यभिमताऽभेदप्रसक्तिप्रसिद्ध्यादीनामनिवार्यतया तद्दिशा प्रसक्तस्यैव निषेध इति पश्य ।

यदुक्तं 'शास्त्रमेव निरर्थकमि'ति तत्तु तुच्छतायाः परामेव कोटिमाटीकते । निर्विशेषचिन्मात्रैक्यवादिनस्तत्र संदिग्धविचार्यविषयाभावात्, अधिकार्यभावात्, प्रयोजनाभावात्, ('किंकेनप्राप्यता'मिति त्वदीयभामती) शास्त्रमनारम्भणीयमेवेति स्थिते शाठ्येन धार्ष्ट्येन वा त्वन्मस्तकस्थितदोषभारमन्यशिरस्यारोपयितुं यतस इति चित्रीयते चेतः पारमार्थिकविमर्शकानामित्यलमधुना । परंपरस्तात् ॥

तस्मात्साधूक्तं विजयीन्द्रपादै'र्जीवब्रह्मभेदावलम्बनेन शास्त्रारम्भसमर्थनं युक्तमिति सर्वं समञ्जसमि'ति । एवं स्थिते 'असद्रीतिरेवाऽऽश्रयस्त' इति मखिवर्यप्रलपनं निपुणतमं निरस्तं वेदितव्यम् । न केवलं मखिवर्यरीतिस्सकलप्रमाणविरुद्धास्माभिराश्रयितुं न शक्यते परंतु सौगतशून्यमेव मखिवर्यतद्भूषणकर्त्रादीनामाश्रय इति प्रतिपादितमस्माभिः 'प्राचीनकण्टकोद्धारे' त्रयस्त्रिंशत्कारिकायां तत्रैवाऽनुसन्धेयोयमर्थ इति स्थितम् ॥

॥ इति जिज्ञासाधिकरणम् ॥

---

(५३) यदुक्त 'मतेने'त्यादि 'परास्तमि'त्यन्तम्—तत्तुच्छम् । शास्त्रलोकव्यवहाराऽपरिज्ञानात् । त्वदीयभाष्य एव 'न ब्रह्मशब्दस्यजात्याद्यर्थान्तरमाशङ्कितव्यमि'ति ब्रह्मपदेन जीवपरत्वपूर्वपक्षस्याऽभ्युपगतत्त्वात् । 'जीवेवेदकमलासने च ब्रह्मशब्द' इति रत्नप्रभा । 'विप्रत्वजाता'विति भामती । 'आदिशब्देन जीव कमलासनशब्दराशीनां ग्रहणमि'त्यानन्दगिरीयटीका । एवं स्थिते

'तथाप्यभ्युपगम्यतथोक्तिरि'ति तावकीनमुन्मत्तविकत्थनं कस्य प्रतारणाय? स्यान्नाम तव वैयाकरणंमन्यवैयात्यलब्धजन्माऽकाण्डताण्डवम् । त्वदीयभाष्यभामत्यादिरीत्यैव ब्रह्मशब्दस्य जीवे प्रयोगोस्तीति प्रतिपादिततया तदालम्बनसहकृतेस्तत्पूर्वपक्षे न काप्यनुपपत्तिरिति मखिवर्यतद्दूषणकारादितुच्छतमजल्पनैः किं?

(५४) यदुक्तं 'परास्तमि'त्यादि 'यत्किंचिदेतदि'त्यन्तम्— तत्तुच्छम् । ब्रह्मशब्दस्य जीवे रूढिसत्वसाधकप्रमाणानामुपन्यस्तत्वात् 'प्रमाणाभावादि'ति तावकीनं विकत्थनं निर्मूलमेव । एवं रूढेः प्रमाणप्रतिपन्नतया तद्रूढिमवलम्ब्य कृतायाश्शङ्कायाः ब्रह्मपदो जीववाचक इत्यस्याः निरसनीयत्वात्प्रकृताधिकरणारम्भस्योचितत्वादिति पश्य ॥

ब्रह्मपदोरूढ्या जीवपरइति पूर्वपक्षः साधुः । जीवे तस्य यौगिकत्वेपि पूर्वपक्षउपपन्नइति प्रतिपादितं विजयीन्द्रपादैः। तस्माच्छास्त्रिनारायण! पठरे! त्वदीयभाष्यभामत्यादिग्रन्थजातम् । स्यान्नाम तवास्मदीयग्रन्थखण्डनपाटवपरिपाटी । त्वदीयभाष्यस्थादिशब्दएव ब्रह्मपदस्य रूढिं गमयतीति यदि तव रूढ्यभ्युगमाऽनीहा तन्निरसनव्यसनिताच तर्हि त्वदीयभाष्यमेवाऽखण्डि त्वया न विजयीन्द्रपादोक्तिरिति संप्रतिविरम्यते। रे! शास्त्रिनारायण! खण्डनयुक्त्यात्वदीयभाष्यादीनामपि सकलदृश्यान्तःपातितया न खण्डनीयकोटिबहिर्भावइति न विस्मर्तव्यं जातुचित्त्वया । परं परस्तात् ॥

(५५) यदुक्त'मनधिगतभावोसी'त्यादि 'हृदयमि'त्यन्तम्— तत्तुच्छम् । प्रमाणबलेन बाधकाभावादन्नमयादिषु ब्रह्मरूपत्वाङ्गीकारेपि जीवब्रह्माऽभेदस्याद्यापि केनापि प्रमाणेनाऽसिद्धेस्तादृशाऽभेदस्य त्वद्दुराग्रहाऽभिमानैकसिद्धत्वान्नतद्बलेन जीवे जगत्कारणत्वयोजनं कर्तुं युक्तमिति पश्य । प्रेक्षावद्ब्राह्मस्य कस्यचिदपि 'भाव' स्याभावा'दनधिगतभावोसी' त्यापादनं त्वदीयशास्त्रविचाराधिकारा-

भावमेव स्फुटयति। न चान्नमयादिप्रकरणइव जीव - ब्रह्माऽभेदेप्रमाण-प्रपितता शङ्कनीया। अन्नमयप्रकरणे प्रमाणसत्त्वाद्बाधकाभावाच्च तद्रूपाणां ब्रह्मत्वेपि जीवब्रह्माऽभेदे प्रमाणाभावाद्बाधकसत्त्वाच्चेति वैषम्यात्। तस्मात्पूर्वपक्ष्युद्भावितामिमतब्रह्मशब्दरूढिपरित्यागेन सिद्धान्तसमर्थनं समञ्जसमिति सिद्धम् ॥

(५६) यदुक्त'मेतेने'त्यादि 'सूचिते'त्यन्तम्—तत्तुच्छम्। अन्नमयादिरूपाणामभेदेपि तेष्वपरोक्षीकरणार्हाणां विशेषाणां जागरूकत्वात्पुनः पुनरुपसत्तिरुत्तरोत्तररूपाऽपरोक्षीकरणायेति न किंचिदनुपपन्नमिति मध्वराद्धान्तएव प्रमाणसिद्धइति प्रेक्षावद्भिरखिलैरभ्युपेयम्। किंच निर्विशेषचिन्मात्रैक्यवादिनस्तवैव मते क्रियासमभिहारेणोपसत्तेरयोगात्। अपरोक्षीकरणयोग्यतावच्छेदकावच्छिन्नविशेषाणामभावेन पौनःपुन्येनोपसत्तेरयोगात्। अन्नब्रह्मापरोक्षीकरणेनैव निर्विशेषचिन्मात्रैक्यस्यापरोक्षीकृतत्त्वाच्चारितार्थ्यान्नोत्तररूपप्रस्तावावकाशइति सिद्धम् ॥

(५७) यदुक्त'मेतेने'त्यादि 'अवश्यंभावादि'त्यन्तम्—तत्तुच्छम्। 'तद्गुणसारत्वा'दित्यत्र गौणएव सर्वकारणत्वविरोध्येवाऽभेदः प्रतिपादितोजीवेशयोरिति त्वदापादनमुन्मत्तप्रलपनम्। सर्वकारणत्वसत्वाऽसत्वाभ्यां जीवेशयोर्मुख्यस्य पारमार्थिकस्यैव भेदस्य सिद्धेरिति न किंचिदनुपपन्नम् ॥

(५८) यच्चजीवमानोरथिकसृष्टिप्रमाणतयावासिष्ठरामायणवचनोदाहरणम्—तत्तुच्छम्। भार्गवानुभूतमृद्वयवाऽप्सरः स्त्रीशृङ्गारलीलाविलासादिनिदिध्यासनमालङ्कारिकस्य तव मखिवर्यस्यैव चारुतामाधत्ते। मानोरथिकसृष्टिशीलस्यापि जीवस्य न रविचन्द्रादिसर्वजगत्स्रष्टृत्वमिति निपुणतमं व्यवस्थापितत्त्वादापादनं त्वदीयं यथापूर्वमुन्मत्तप्रलपनमेव निष्प्रमाणमिति सिद्धम् ॥

नूनमप्सरः स्त्रीमोहान्धानामाहोस्विद्धार्गवाद्यन्यानुभूतस्यापि मृद्वयत्राप्सरः स्त्रीलीलाविलासस्य निदिध्यासनेन केवलेन कृतार्थमन्यमानानां प्रमाणप्रमेयज्ञानतिरोधानदिगान्ध्यादि। साधूदाहृतं त्वदीयमखिवर्येण 'सुश्रुत्वमि'त्यादि 'ममान्धादिश'इत्यन्तं 'शिवार्कमणिदीपिका'याम् । तस्माद्वासिष्ठरामायणपारायणमनोगताप्सरःस्त्रीशृङ्गारलीलाविलासानुभवसमनन्तरतद्विरहसमाधिगतसकलदिगान्ध्यस्य मखिवर्यस्य 'यथागुरुस्तथाशिष्य'इति वेदान्तकूटस्थोपदिष्टमानोरथिकपाश्चभौतिकाप्सरःस्त्रीसमागमसरणिसंचरणशीलतद्भूषणकर्त्रादीनां च समानाधिकरणशास्त्रमर्यादाज्ञानस्य तिरोहितत्त्वादापाद्यते सर्वजगत्कारणत्वं विष्णवेकनिष्ठं जीवेपिसंभवतीति संप्रति विरम्यते । परं परस्तात् ॥

(५९) यदुक्तं 'तत्रब्रूम'इत्यादि 'दिगि'त्यन्तम्–तत्तुच्छम् । अन्नमयादिषु प्रमाणबलेन बाधकाभावेन पारस्परिकभेदाऽभावेपि न जीवेशाऽभेदसिद्धिः । जीवेशैक्यस्य प्रमाणविरुद्धत्वात् । बाधकदुष्टत्वात् । ईश्वरस्य प्रेक्षावत्त्वादघटितघटनाशक्तिमानपि नात्मनोजीवभावमनुमन्येतेति पूर्वमेव निपुणतमं व्यवस्थापितम् । अभेदकार्यस्य कस्याप्यनुपादाने पारिभाषिकःस्यादभेदइति जीवेशाऽभेदे पारस्परिकसुखदुःखाद्यनुसन्धानप्रसङ्गोदुर्वारइति साधूक्तं विजयीन्द्रपादैः । तस्मात्सिद्धं सकलप्रमाणविरुद्धमद्वैतं प्रेक्षावद्भिस्तिरस्करणीयं श्रेयस्कामैरिति ॥

किंच श्रुतीनामपार्थं कोवक्ति? न तावत्तत्ववादी । किंतु मायावादी । तद्रीत्या श्रुतीनामतत्वाऽऽवेदकत्वा'त्तत्वमसि'वाक्यएव लक्षणाऽऽश्रयणादित्यलं दिगान्ध्यमूढप्रजल्पननिरसनोद्यमेन ॥

(६०) यदुक्त'मेवंसती'त्यादि 'उपसंहरती'त्यन्तम्—तत्तुच्छम् । ब्रह्मशब्दस्य रूढ्याश्रयणेन पूर्वपक्षस्साधीयानित्युपपादितत्वात् । ब्रह्म जिज्ञास्यमित्युक्तम् । जिज्ञास्यब्रह्मणोलक्षणमत्राधि-

करणे प्रतिपादितमिति जन्माधिकरणस्य प्रामाणिकोऽस्मन्मते जन्मलाभः। स्यादेतत्। त्वदीयभाष्यरीत्या 'आत्माचब्रह्मे'तिसिद्धतया 'तद्विशेषं प्रतिविप्रतिपत्ते'रित्युक्तत्वेपि वस्तुतस्त्वद्भाष्यकाराभिमतनिर्विशेषचिन्मात्रे जिज्ञास्यविशेषाऽभावात्संशयाद्यभावाज्जिज्ञासाया एवाऽनुदयाज्जिज्ञास्यवस्तुलक्षणकथनादीनामवसरःकः? त्वन्मते वस्तुतःजिज्ञासा वन्ध्याकन्या। जिज्ञास्यलक्षणकथनं नूनं वन्ध्याकन्यावरान्वेषणम्। तस्मात्तवमते जन्माद्यधिकरणोत्थानं न कथमपि सिद्ध्येदिति प्रत्यवस्थानस्य निराकर्तुमशक्यत्वात्। एवमपि यदि तव जन्माद्यधिकरणपूर्वपक्षसिद्धान्तोत्थानं तदा तदुत्थानमस्मन्मतेपि सूपपादमिति विरमेर! शास्त्रिनारायण! विजयीन्द्रपादोक्तिदूषणदुर्व्यापारात्। अन्यदन्यदा॥

॥ इति जन्माद्यधिकरणम्॥

---

(६१) यदुक्त 'मेतेने'त्यादि 'दिगि'त्यन्तम्—तत्तुच्छम्। गौणानामेव सहस्रनामसु प्रवेशइत्यर्थे विशेषाभावाद्विशेषप्रमाणाभावाच्छिवसहस्रनामस्वपि गौणानामेव प्रवेशइतिशिवान्यविष्णोरेव मुख्यार्थत्वं सिद्ध्येत्। स्यादेतत्। अनुमानानामुपाधिप्रतिपक्षपराहत्यादिशङ्काकलङ्कितप्रमाणभावतया नाऽनुमानैरन्यत्र विष्णोर्जगत्कारणत्वसिद्धिः। धर्मादिवत्तस्यशास्त्रैकसमधिगम्यत्वात्। तस्माट्टीकार्थाऽनवबोधमूलकमेव तावकीनं विकत्थनम्। श्रुतिविरुद्धानुमानानामन्यगामिजगत्कारणतासाधकत्वेनाभिमतानामप्रमाणभावाऽऽपन्नतया निरसनविषयत्वादिति न किंचिदनुपपन्नम्॥

(६२) यदुक्तं 'श्रुतीनामि'त्यादि 'रहस्यमि'त्यन्तम्—तत्तुच्छम्। अन्यथासिद्ध्यादिदोषदूरश्रुतिलिङ्गादिसनाथितोपक्रमोपसंहारादितात्पर्यलिङ्गैस्तत्तच्छ्रुतिवाक्यानां तत्तदनेकार्थपरत्वानिश्चयेपि 'सदेवे'त्यादिसृष्टिवाक्यानां तदभावान्नानेककर्तृपरता। अद्वैतमते

सृष्टिवाक्यानामानर्थक्यमेव । 'द्यावाभूमीजनयन्देवएक'इतिप्रमाणब-लेन कर्त्रैकत्वनिश्चयेन सृष्ट्यादिप्रतिहतेरभावात् । गुणातीतस्य माया-शबळितत्वस्य हेयत्वाभावे विष्ण्वतिरिक्तानां पारतन्त्र्यस्यापि हेयत्वा-भावएव । किंच न शून्यवादाद्वैलक्षण्यं मायावादस्येति भगवत्पादै-स्सप्रमाणं सपरिकरमुपन्यस्तत्त्वात्तद्रीत्याऽद्वैताभिन्नसौगतसमयशून्य-कुक्षिनिक्षेपापेक्षया कलहस्याभ्यर्हितत्वान्नास्माकं शाङ्करीयमन्यद्वाऽद्वैत मुपादेयम् । तस्माच्छास्त्र्युपदिष्टस्य रहस्यस्य चिदम्बररहस्यवद्बाल-जनप्रतारणैकफलकत्वमेवेति सिद्धम् ॥

(६३) यदुक्तं 'तथाचे'त्यादि 'अर्थ' इत्यन्तम्—तत्तुच्छम् । त्वदभिमतमायायां प्रमाणाभावात् । त्वदभिमतैक्ये प्रमाणाभावात् । तत्तद्गुणविशिष्टमायाया नितरामप्रामाणिकत्वात् । उपाधीनामप्रामाणिकत्वात् । तस्मादप्रामाणिकदुरभिमानैकमानबाधितार्थपर-म्परैकोपादानकत्वप्रक्रिया निर्मूलेति प्रेक्षावद्भिरुपेक्षणीया । तस्मा-'त्परब्रह्मभूतास्त्रय'इति मखिवर्यप्रलापोनिग्रहाऽनर्हएव ।

(६४) यदुक्तं परास्तमि'त्यादि 'दिगि'त्यन्तम्—तत्तुच्छम् । अस्मदेकत्वनिर्वचनस्यैव प्रामाणिकत्वात् । अस्तुवा स्वसजातीय द्वितीयराहित्यमेकत्वम् । एवमपि विष्ण्वेकनिष्ठजगत्कारणत्वाऽनपा-यात् । आत्माश्रयदोषापादनस्य भ्रान्तिमूलकत्वात् । ब्रह्मणउपा दानकारणत्वस्याऽद्याप्यसिद्धेर्बहुभवनस्य त्वदुक्तरीत्योपपादनस्या ऽयोगात् । कर्त्रनेकत्वाऽनभ्युपगमेन मूलोच्छेदापादनस्य त्वदीय मूलतूलाविद्यामूलकत्वात् । उपादानस्य ध्वंसकारणत्वाभावादभिन्न-निमित्तोपादानकारणत्वस्य ब्रह्मण्यसिद्धेः । 'यतोवे'त्यादिश्रुत्या जन्मादिसूत्रेणच ब्रह्मणः ध्वंसकारणत्वावेदनेन तस्य निमित्तकारणत्व-मेवेतिसिद्धम् । तन्निरपेक्षं सर्वैःप्रेक्षावद्भिर्निमित्तकारणत्वमेवब्रह्मण आश्रयणीयमभ्युपगन्तव्यंचेत्यलमधुना ॥

(६५) यदुक्तं 'तस्मादि'त्यादि 'यत्किंचिदेतदि'त्यन्तम्—तत्तुच्छम्। सृष्ट्यादिवाक्यानां परस्पराऽविरुद्धैकार्थपरत्वमेव सिद्ध्यतीतिप्रतिपादिततया नाऽनेकस्रष्टृपरत्वशङ्कावकाशः। नाप्यद्वैतमतप्रवेशापत्तिचोद्यावकाशः। तवैव शून्यमतसंचारित्वमिति तत्रतत्र क्रियासमभिहारेण व्यवस्थापितत्त्वादिति परं परस्तात् ॥

(६६) यदुक्तं 'तत्त्वित्यादि' 'संभाषणेनेत्य'न्तम्–तत्तुच्छम्। तत्तदधिकारिणःप्रति भूमशब्देन पूर्णत्वस्यैव बोधनात्। सर्वे तटाकास्संपूर्णाइत्युक्ते अल्पतटाकपूर्णत्वं न पूर्णत्वमितिशक्येत प्रत्यवस्थातुम्। तस्माद्बिंबप्रतिबिम्बभावेनाऽऽत्मैक्यंवदतस्तवैव कृत्यमद्वैताऽनुभवकापिशायनमदसंधापितमुष्टिप्रहारप्रसाधितदर्पणचूर्णीकरणादि ॥

(६७) यदुक्तं 'सत्वि'ति 'संक्षेप'इत्यन्तम्—तद्विजयीन्द्रपादकण्टकोद्धाराऽसंस्पर्शितयोपेक्ष्यते। तस्माच्छास्त्रयोनिसूत्रपूर्वपक्षसिद्धान्तयोरस्मन्मते न काप्यनुपपत्तिरिति सिद्धम् ॥

॥ इतिशास्त्रयोनित्वाधिकरणम् ॥

---

(६८) यदुक्त 'मेतेने'त्यादि 'परास्तमि'त्यन्तम्–तत्तुच्छम्। वाक्याऽर्थाऽनवबोधात्। तात्पर्ये महत्वंच परममुख्यतात्पर्यविषयत्वम्। तथाच - कर्म - ब्रह्म - काण्डगतपदवाक्यानां वृत्तिभेदेन कर्म - ब्रह्मोभयपरत्वस्याऽनपायात्। एवंस्थिते नास्तिकत्वाऽऽपादनमेव तव नास्तिकत्वं प्रकटयति - तथाहि - वेदस्याऽतत्वाऽऽवेदकत्वंवदतस्तववर्णा - श्रम - तत्तद्विहितनिषिद्धकर्म - तत्फलस्वर्गनरकादीनामध्यस्तत्वान्नास्तिकत्वं स्फुटं। स्यादेतत् ॥

उपक्रमादितात्पर्यलिङ्गैर्विष्णुरेकएव जगत्कारणमितिनिश्चितत्वान्नशिवादिष्वतिव्याप्तिशङ्कावकाशः। पाशुपताद्यागमेषु तत्तदुपक्रमादिभिस्तत्रतत्र शिवादीनां जगत्कारणत्वस्यप्रतिभानेपि प्रबलप्रमाणसत्त्वेन प्रमाणान्तरविरोधसद्भावेन शिवादीनां जगत्कारणत्वा-

ऽभावोऽवसीयते । उपासनाया अज्ञानमूलकत्वाऽऽपादनंतु मिथ्योपासकस्य तवैव तद्दोषैकभाजनत्वं व्यवस्थापयति । शिवादीनां शास्त्रगम्यत्वस्य निपुणतमं निरस्तत्वात् ॥

(६९) यदुक्त 'मेतेने'त्यादि 'विभावयंत्वि'त्यन्तम् तत्तुच्छम् । उक्तश्लोकप्रामाण्यस्य त्वदीयविकत्थनरूपसाहसिकप्रतिज्ञामात्रेण निषेद्धुमशक्यत्वात् । नित्यस्यापि विशेषमहिम्ना तथ्यनानारूपवत्त्वस्य नितरां प्रामाणिकत्वात् । तस्मात्काल्पनिकनानारूपाभ्युपगमापादनं तुच्छम् । तन्मूलकपरमतप्रवेशापादनं चोन्मत्तप्रलपनम् । 'सुधियोविभावयंत्वि'त्युपसंहारस्तु त्वामव्यवहितोत्तरक्षणएव शून्यतायां साक्षादवतारयति । तथाहि—सुधीनामध्यस्तत्वाद्विभावनाया अपि काल्पनिकत्वात्काल्पनिकसुधीनिष्ठकाल्पनिकविभावनाबलेन कथंकारं परमतखण्डनसिद्धिस्तवस्यात्कथंवात्वदुक्तीनां प्रामाणिकत्वमुपादेयत्वं वेति चित्रीयते चेतः । एतादृशकाल्पनिकसामग्रीपरंपरा नूनं त्वां सौगतशून्यतायामेवावतारयतीति भजजोषंभावम् । शून्यं प्रविश । वाचाटतां त्यज । विरम सर्वथा विजयीन्द्रपादोक्तिखण्डनदुर्व्यापारादित्यलमधुना । विस्तरस्तु समयान्तरे भविष्यति ॥

॥ इति समन्वयाधिकरणम् ॥

---

(७०) यदुक्तं 'तन्ने'त्यादि 'अप्रयोजकत्वादि'त्यन्तम्—तत्तुच्छम् । बिम्बभूतं ब्रह्म सर्वशब्दवाच्यमेव । ईक्षणीयत्वात् । बिम्बभूतस्य ब्रह्मणोवाच्यत्वनिषेधाभावात् । तस्योपास्यत्वमेव निषिध्यते । प्रतिबिम्बग्रहणस्य बिम्बग्रहणसापेक्षतयाबिम्बस्य श्रुत्यतिरिक्तमानान्तराऽग्राह्यत्वेनेक्षणीयत्वाद्वाच्यत्वं सिद्ध्यतीति तत्वम् । उपासनावाक्यानि बिम्बविषयाणि । बिम्बगुणेषु श्रवणमननगृहीतेषु निदिध्यासनमुपपद्यते । श्रवणमननचिरन्तनदृढतरसंस्कारवासितचित्तप्रतिबिम्बितब्रह्मणउपास्यत्वोपपत्तेः । विभिन्नविषयकत्वेनाऽप्र-

योजकत्वादिति त्वदीयं विकत्थनमखिलापहास्यम् । प्रतिबिम्बोपासनायाएव बिम्बापरोक्षद्वारत्वेन क्लृप्तत्त्वात् । अन्यथा त्वन्मतेपि सगुणोपासनया कथं निर्गुणे शून्ये वोपसंहारः? इयांस्तुविशेषः । त्वन्मते सगुणस्य मिथ्यात्वमेवेति तस्य द्वारत्व-साधनत्वादिनोपपद्यते । अस्मन्मतेतु प्रतिबिम्बस्य बिम्बवत्सत्यत्वान्नकिंचिदनुपपन्नम् ॥

(७१) यदुक्तं 'परास्तमि'त्यादि 'दिगि'त्यन्तम्—तत्तुच्छम् । उपास्यस्योपास्यत्वज्ञाने, बिम्बगुणज्ञानस्याऽऽवश्यकत्वाच्छ्रवणसाध्यतादृशज्ञानसंपादनानन्तरभाविमनननिष्पादितदृढतरसंस्कारसाचिव्यमानसेन निदिध्यासनस्य योगशास्त्रोपदिष्टमार्गेण संभवात् । तस्माद्गुणवर्णनमुपास्यसमर्पणार्थमिति न व्यधिकरणत्वं । बिम्बज्ञानाऽभावे प्रतिबिम्बज्ञानोदयाऽभावाद्बिम्बस्य श्रुत्येकसमधिगम्यत्वाच्छास्त्रयोनित्वात्सिद्धमीक्षणीयत्वेन सर्वशब्दवाच्यत्वम् । न बिम्बज्ञानस्य वैफल्यम् । प्रतिबिम्बज्ञानोत्पादकत्वात् । प्रतिबिम्बज्ञानं विना प्रतिबिम्बस्यध्यानाऽयोगात् । तस्मादुभयमावश्यकं ज्ञानमुपासनाचेति बिम्बभूतं ब्रह्म श्रौतम् । मानान्तराऽनधिगम्यम् । यस्मात्तत्सकलगुणपरिपूर्णं तस्मात्सकलशब्दवाच्यमितिराद्धान्तः । एवं ज्ञाते बिम्बे अधिकारी प्रवर्तते उपासनादिषु । तस्मादुभयस्याप्यावश्यकतेति स्थितम् । सति चैवं त्वदीयमखिलमपि विकत्थनं निर्मूलकमेव । 'तदव्यक्तमाहही'त्यधिकरणार्थस्तु त्वया नाऽवबुद्धएव । श्रवण-मनन-निदिध्यासनभगवत्प्रसादाद्यभावे साक्षात्कर्तुमशक्यत्वमेव ब्रह्मणोऽव्यक्तत्वमिति विजयीन्द्रपादैः परिष्कृतत्त्वात्सर्वमपिसमञ्जसमस्मन्मते । तस्मादत्रविरोधस्य कस्याप्यभावाद्विरोधो 'ब्रह्मणापिदुरुद्धर' इति तावकीनमुन्मत्तप्रलपनं निग्रहाऽनर्हमेव । कथमिव विरोधाभावे विरोधंब्रवीषि? बाढमेवंब्रवीषि निरङ्कुशत्वात्ते तुण्डस्य न युक्तियुक्तं ब्रवीषीत्यलमधुना । स्यादेतत् ॥

त्वदीयमीक्षत्यधिकरणरचनं तु सकलप्रामाणिकाऽपहास्यम् ।

ब्रह्मणश्शास्त्रयोनित्वे साधिते, 'समन्वयादि'ति समन्वये हेतूकृते, सांख्याभिमतप्रधाननिराकरणस्याऽत्र का कथा? त्वदीयभाष्ये पदवाक्यप्रमाणज्ञेनाऽऽचार्येण वाक्याभासयुक्त्याभासप्रतिपक्षयः पूर्वपक्षीकृत्यनिराक्रियन्त इत्युक्ततया तादृशनिराकरणस्याऽविरोधाध्याय एव कर्तव्यत्वान्नात्रसमन्वयाध्याये तादृशनिराकरणस्यौचित्यमवसरोवा। स्यादेतत् ॥

यदीक्षत्यधिकरणे जगत्कारणत्वब्रह्मलक्षणस्य सांख्याभिमतप्रधानेऽतिव्याप्तिर्निराक्रियते तादृशलक्षणदोषनिराकरणं तु जन्माद्यधिकरणेवाऽनुपदं शास्त्रयोन्यधिकरणे वा साधनीयं समर्थनीयं च। तथा नाऽनुष्ठितमिति व्यर्थमेवेक्षत्यधिकरणं समन्वयाध्याय आहोस्विदतितरामप्राकरणिकम्।

किंच वाच्यत्वमन्तरा न कथमपि शास्त्रयोनित्वं ब्रह्मण इति नापि समन्वयस्सूपपाद इत्यकामेनापित्वया वाच्यत्वं ब्रह्मणस्समर्थनीयं यत्रकुत्रापि। ततोवरमस्मद्रीत्येक्षत्यधिकरण एव वाच्यत्वसमर्थनमिति सिद्धम्। एवं च त्वन्मत ईक्षत्यधिकरणस्य समन्वयाध्याये कथमप्यनुत्थानमेवेति दिक् ॥

॥ इतीक्षत्यधिकरणम् ॥

---

(७२) एवमा'नन्दमयोभ्यासादि'त्यत्र, आकाशस्तल्लिङ्गादि'त्यत्र, 'ज्योतिश्चरणाभिधानादि'त्यत्र, 'छन्दोभिधानात्' 'प्राणस्तथाऽनुगमादि'त्याद्यधिकरणेषु, तथैवा'न्तस्तद्धर्मोपदेशात्' 'अत एव प्राणः' 'शब्दादेवप्रमित' इत्याद्यधिकरणेषु च दीक्षितोद्भावितसकलदूषणानां खण्डनं विजयीन्द्रपादैस्सपरिकरं सप्रमाणं चाकारीति विस्तरस्तु 'कण्टकोद्धारा' देवाऽवगन्तव्यः ॥

(७३) 'शिवतत्वविवेके' 'शिवकर्णामृते' 'शिवार्कमणिदीपिका'यां च दीक्षितोदाहृतशिवसर्वोत्तमत्वसाधकत्वाभिमतप्रमा-

णानां युक्तीनांच निरासः 'परतत्त्वप्रकाशिका'याम्, 'न्यायमौक्तिकमाला'याम्, 'विरोधध्वान्तचन्द्रिका'याम्, 'कुचोद्यकुठारा'दिषु वादप्रबन्धरत्नेषु तत्रतत्र विजयीन्द्रपादैर्निपुणतमं प्रसाधित इति तन्निरासप्रकारादिविस्तरस्तु तेष्वेव प्रबन्धेष्वनुसन्धेयः। एतेन 'शिवतत्वविवेक' इत्यादि 'दिगि'त्यन्तं निरवशेषं निरस्तं वेदितव्यम् ॥

(७४) यदुक्तं 'नन्वि'त्यादि 'नाऽखण्डत्वहानिरि'त्यन्तम्—तत्तुच्छम् । त्वदीयसकलविकल्पानां दोषग्रस्तत्वात्—तथाहि—आद्ये अद्वैतहानेरनिवार्यत्वात् । अनभ्युपगममात्रेण प्रामाणिकनिरासासिद्धेः । द्वितीये महावाक्यस्याऽतत्वाऽऽवेदकत्वापातात् । न चेष्टापत्तिः। महावाक्यस्याऽतत्वाऽऽवेदकत्वे अद्वैतहानिर्वज्रलेपायते । तृतीयादिविकल्पेष्वेवमेवाऽद्वैतहान्यादिदोषाः स्फुटा इत्यवधेयम् ॥

किंच 'संसर्गाऽसङ्गिसम्यग्धीहेतुतायागिरामि'त्यादि वदतस्तव महावाक्यस्याऽतत्वावेदकत्वे सम्यग्धीनाशः । तत्वावेदकत्वे संसर्गाऽसङ्गितानाशः । अद्वैतनाशश्चेति । तस्मात्सिद्धं महावाक्यार्थस्य सखण्डत्वमद्वैतहानिश्चेति ॥

(७५) यदुक्तं 'वस्तुतस्त्वि'त्यादि 'विभावनीयमि'त्यन्तम्—तत्तुच्छम् । सौगतसमय एव खलु हीनमध्योत्कृष्टाधिकारिभेदेन शिष्याश्शून्यतायामवतार्यन्ते । शून्यवाद्यभिन्नस्य मायावादिनस्तवैव मन्दाधिकारिण उद्दिश्य सगुणादिनिरूपणस्यावश्यकता । नास्मन्मते तादृशावश्यकता । तस्मान्मन्दाधिकारिण उद्दिश्य मध्वाचार्यैरभ्यधायि द्वैतमिति विकत्थनमुन्मत्तप्रलपनमेव । किंच त्वदुदाहृतकाल्पनिकसौरपुराणवचनानुसारेण मध्वाचार्याणां पूर्वपक्षे दृढमतितया तदुपदिष्टद्वैतस्य त्वद्रीत्यैव पूर्वपक्षत्वान्मन्दाधिकारिणोपि सिद्धान्तिन इति तान्प्रति पूर्वपक्षोपन्यासस्याऽयोगात् । सिद्धान्तिन उद्दिश्य पूर्वपक्षोपन्यासे तदुपदेष्टुः प्रतारकत्वापातात् । वस्तुतस्तु त्वदाचार्य एव प्रतारकः । तथाहि—निर्गुणस्यैकस्यैवपारमार्थिक-

त्वात्सगुणतदुपासनादिमिथ्योपदेशकर्ता प्रतारकः । विधि-निषेध-शास्त्राणामध्यस्तत्वोपदेशक एव प्रतारकः । वर्णाश्रमादिव्यवस्थायामिथ्यात्वोपदेशक एव प्रतारकः । एवं स्थिते न प्रतारकः, न प्रतार्यः, न प्रतारणं 'चिन्मात्रोहं सदाशिव' इति चिन्मात्रसत्तारूपौपनिषदकापिशायनमदमत्तविकत्थनविचक्षण एव सकलप्रतारकमण्डलाभिषिक्त इत्यलमधुना ॥

तस्मादवेहि रे! शास्त्रिनारायण! मन्दाधिकारिण उद्दिश्य द्वैतमभ्यधायि मध्वाचार्यैरितिविकत्थनमापादनं वा तव निरतिशयमान्द्यमनधिकारितां शास्त्रविचार एव प्रकटयति ॥

वस्तुतस्तु परमोत्तमाधिकारिशिखामणिसात्विकमुक्तियोग्यनिजान्तरङ्गवैष्णवभक्तानेवोद्दिश्य भगवत्पादैरुपदिष्टो जीवेशभेदप्रधानद्वैतराद्धान्तः। तस्मात्साधूक्तमकामेनापित्वया 'तेषां द्वैते परमतात्पर्य'मि'ति । नूनं वागधीश्वरी त्वदीयदुष्टजिह्वां लेखिनीं च समानाधिकरणाऽबाधितपारमार्थिकशब्दप्रयोगेऽत्रैकस्मिन्नेव प्रकरणे प्रेरयामासेति मन्यामहे । स्यादेतत् ॥

(७६) यदुक्तं 'एवमि'त्यादि 'शिवमि'त्यन्तम्—तत्तुच्छम् । तथाह्यत्रेदं विचारणीयं कस्य प्रच्छन्नचार्वाकतेति ! न द्वैतिनाम् । तेषां चार्वाकसरणिसंचरणाभावात् । चार्वाकाहिप्रत्यक्षमात्रप्रामाण्यवादिनः । स्वर्गनरकादिनिषेद्धारः । ऋणं कृत्वा घृतं पिबेत्युद्घोषयन्तः । अद्वैतिनामेवमेव खलु श्रुतेरतत्त्वाऽऽवेदकता । प्रत्यक्षादिप्रमाणप्रमेयव्यवहाराणामध्यस्तता । अतत्त्वाऽऽवेदकवेदबोधितपुण्यपापस्वर्गनरकादि सर्वमध्यस्ततया नास्त्येव । अस्तिचेत्तदस्तिता शुक्तिरूप्यास्तितासमानसत्तायोगक्षेमा । पालघाटप्रान्तप्रसिद्धतमपर्पाटकमीमांसाशालिनामेव चार्वाकोपदिष्टघृतपानावश्यकतौचित्यादि । घृतसंग्रहश्चार्णेन वा स्वार्जितेन वा स्वापतेयेन भवत्विति नास्माकंतत्राऽन्यतरपक्षाऽऽग्रहः ॥

एवं स्थिते वस्तुतत्वे पारमार्थिकनिष्पक्षपातिविमर्शका एव विमृशन्तु कस्य प्रच्छन्नचार्वाकत्वमिति । निपुणतममालोच्यमाने निरूप्यमाणे तु न केवलं प्रच्छन्नचार्वाकत्वमपि तु प्रकटचार्वाकत्वमेवाऽद्वैतिनामतत्वाऽऽवेदकत्वमभ्युपगच्छतां वेदानामेवं पुण्यपापस्वर्गनिरयादीनामध्यस्तत्त्वं प्रतिपादयताम् । किंच 'पश्वादिभिश्चाऽविशेषात् समानः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहार' इति खलु त्वदीयं भाष्यम् । अस्तिनून 'माहारनिद्राभयमैथुनादिसामान्यमेतत्पशुभिर्नराणामि'त्यादिसंवादिप्रमाणवचनजातम् । ततश्च पशुनिर्विशेषाहारादिमात्रव्यग्राणामेव प्रच्छन्नप्रकटोभयविधचार्वाकत्वं न कथमपि विशिष्य द्वैतिनां ब्रह्ममीमांसाशास्त्रविचारविवादादिषु निग्रहस्थानभाजनतयेति सिद्धम् । किंच 'तत्वोद्योता'दिप्रबन्धेषु भगवत्पादोक्तदिशा तव त्वदीयानामेव प्रच्छन्नसौगतत्त्वमपीत्यधुना विरम्यते । परंपरस्तात् ॥

(७१) अत्रान्यदपि किंचिद्वक्तव्यमवशिष्यते । मध्वाचार्याणां श्लोकरचनायां सामर्थ्यं नास्तीत्युद्घुष्टं दीक्षितेन । तथा तैस्सर्वत्राऽसाधुभिरेवशब्दैर्व्यवहार इति च । एतादृशक्षुद्रदोषाणां खण्डनं 'कण्टकोद्धारे' विजयीन्द्रपादैः कृतमिति नात्र पुनस्तत्खण्डनावकाशः ॥

एवमपि 'पूर्वत्रतन्त्र' इति दीक्षितप्रयोगः कथं साधुरिति विचारणीयम् । न च श्रीकण्ठप्रयुक्तत्वात्तस्य साधुत्वम् । तत्रैव विचारावश्यकतापादनात् । वस्तुतस्तु कर्ममीमांसायाः 'पूर्वत्रतन्त्र' इति केनाप्यभियुक्तेनाऽप्रयुक्तत्त्वादभियुक्ताऽप्रयुक्ततादोषोदुर्निरसः । अनयैवदिशा ब्रह्ममीमांसाया 'उत्तरत्रतन्त्र' इति व्यवहारोस्तिवा ?

स्यादेतत् । अपि च श्लोकरचनाविचक्षणोपि दीक्षितः श्रुतपरगुणसां - कर्यमिच्छत्युपास्ता'विति हठादेवाकृष्य धर्षयति स्रग्धराम् । तेन दीक्षितेन स्रग्धराधर्षणवदार्याधर्षणमप्यकारि ।

उपश्लोकितमनेन 'इहरमणीयचरणश्रवणात्कर्मशेषयुत एवे'ति । किंच मखिवर्यभूषणकर्तृश्लोकरचनावैचक्षण्यं तु मखिवर्यवैचक्षण्यातिशायीति नूनं शिष्याद्गुरोः पराभवः । 'हरिहरशास्त्र्यनुग्रहादेव' 'जैमिनिव्यासमुनीश्वरे' तिलिखन्स्रग्धरापीडनशीलस्यगुरोरनुरूप एवाऽऽर्यापीडकःशिष्यः । 'तथापि स्नेहेनब्रुवामिश्लोकमि'तिप्रसिद्धकविरीतिमनुकरोति सकलपरिहासैकभाजनभूता शास्त्रिनारायणस्यरचनेत्यधुना विरम्यते । परं परस्तात् । अकुशलरीतिः किमिति कुशलैरादृता ?

तस्मात्तत्प्रवृत्तिनिमित्ततादधीन्यनयमहायोगविद्वद्रूढ्यादिनिराबाधप्रमाणप्रतिपन्नसकललौकिकवैदिकशब्दमहासमन्वयैकविषये, सत्याखिलजगज्जन्म-स्थेम-लय-नियति-ज्ञानाऽऽवृति-बन्ध-मोक्ष-निमित्तकारणे, अष्टाङ्गयोगसाधनसमधिगतविषयवैराग्यपरिशुद्धमानसश्रवणमननिदिध्यासनादिसाधनकलापतत्प्रसादैकसाध्यसाक्षात्कारे, निजभक्तसमूहाधिकारिमनुजोत्तमस्वस्वरूपानन्दाविर्भावचतुरशीतिलक्षयोनिसंसरणजननमरणाख्यपुनरावृत्तिराहित्यलक्षणसकलपुरुषार्थमूर्धाभिषिक्तमोक्षसाम्राज्यवितरणसर्वस्वतन्त्रे, परमकारुणिके, भगवति, पद्मावतीलीलाविलासैकविश्रान्तिदिव्यमङ्गळविग्रहशोभिसकलकल्याणगुणपरिपूर्णे श्रीवेङ्कटेश्वरे, श्रीमदमृतवल्लीशृङ्गारैकमनोहरयोगिचक्रवर्तिश्रीमत्पूर्णप्रमतिदहरकमलकुहरविहरमाणश्रीलक्ष्मीनृसिंहे, त्रिशत्रिकोटिवसुरुद्रदिवाकरादिसंततसंसेव्यमानचरणनलिनश्रीहेमाब्जनायकीविश्वातिशायिपरमसात्विकानुरागसुधास्यन्दिमन्दस्मितामन्दाऽऽनन्दानुभवशीलरसिकाग्रगण्यशार्ङ्गपाण्यभिख्यश्रीवैकुण्ठायमानतिरस्कृतवाराणस्यादिपुण्यक्षेत्रकुम्भघोणरचिताऽर्चावतारश्रीमदपर्याप्तामृतपरब्रह्मणि, यद्ब्रह्मसूत्राणां योजनमानन्दतीर्थभगवत्पादैरकारि तदेव प्रामाणिकैः प्रेक्षावद्भिर्मुक्तिसुखानुभवमभिकांक्षमाणैरङ्गीकरणीयमनिशमादरणीयं चेति सिद्धम् ॥

साधुसमर्थितं विजयीन्द्रगुरुपादैः—'तस्मात्सकलप्रमाणविरुद्ध-मद्वैतिमतं न प्रेक्षावदुपादेयम् । किं तु सकलप्रमाणाऽविरुद्धं श्रीमदानन्दतीर्थीयमतमेव प्रेक्षावदुपादेयमिति सर्वं समञ्जसम्' इति ॥

नादिरायणपदेन शास्त्रिणा
यत्कृतं मखिवरिष्ठभूषणम् ।
खण्डितं सकलदोषभाजनं
नागराजकृतिना विभाव्यताम् ॥१॥

मध्वतन्त्रविषये दुराऽऽग्रहान्निष्प्रमाणंमदसीयजल्पनम् ।
वीक्ष्यतां कणश एव खण्डितं पारमार्थिकविमर्शकोविदैः ॥

श्रीजयीन्द्रगदितार्थबोधधी-
शून्यशास्त्रिकृततुच्छदूषणम् ।
मान्यतात्त्विकमतेन खण्डितं
शून्यवादि 'मखिवर्यभूषणम्' ॥३॥

सौख्यतीर्थमतमार्गरोधकः
मुक्तियोग्यपदचारबाधकः ।
शास्त्रिनामकनवीनकण्टकः
पाटितोऽत्रमखिवर्यसाधकः ॥४॥

पञ्चरत्नमतिकान्तिभासुरं पञ्चचारुबहुरूपसूत्रगम् ।
पञ्चकोशकमलामनोहरे पञ्चपातकहरे समर्प्यते ॥५॥

पञ्चरत्नमतिलोकभाऽन्वितं
नागराजकृतिना समर्पितम् ।
स्वीकरोतु च करोतु सत्कृपां
श्रीजयीन्द्रहृदयाब्ज(दहराब्ज)गोहरिः ॥६॥

॥ श्रीविजयीन्द्रगुरुपादान्तर्गतश्रीलक्ष्मीनृसिंहार्पणमस्तु ॥